M-2967

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मुहूर्तदीपिकः सटीक | महादेव | ज्योतिष | पूर्ण | - | 3/12 | 50 | संस्कृत | कागद | 10 | 52 | शके 1786 | |

अथ मुहूर्त दीपिका प्रारभ्यते. ५

श्रीगणेशायनमः॥ ॥ ग्रंथकर्ताकथयति अहंमुहूर्तदीपकंकुर्वेमुहूर्तान्जातकर्मादिसंस्कारसमयान्दीपयतीति किंकृत्वा एकरदंदेवंगणे-
शंचपरंशारदांसरस्वती गुरुंच प्रणम्य किंलक्षणंमुहूर्तदीपकं बालानांअज्ञानमेवतमः तदपहंतीतिबालाज्ञानतमोपहः तं १ प्रतिपदभिमुखास्ति-
थयोनंदाभद्राजयाख्याश्चपरंरिक्तिकाः पूर्णाःस्युः प्रतिपत् अभिमुखामुख्यायासांताः अत्रबहुवचनंतिस्त्रोनंदाख्याः तिस्त्रोभद्राख्यास्तिस्त्रोजयाख्याः
तिस्त्रोरिक्तिकास्तिस्त्रः पूर्णाः एताःसंज्ञातुल्यार्थकृत्याः संज्ञातुल्यं अर्थकृत्यंकार्यनिष्पत्तिर्यास्ताः एताएवनंदाद्याः भृगुविद्वनिजार्कीज्यवा

प्रणम्यैकरदंदेवंशारदांगुरुमेवच मुहूर्तदीपकंकुर्वेबालाज्ञानतमोपहं १ नंदाभद्राजयाख्याःप्रतिपदभिमुखारिक्तिकास्युश्च
पूर्णाःसंज्ञातुल्यार्थकृत्याभृगुविदवनिजार्कीज्यवारेषुसिद्धाः स्त्रीसेवाक्षौरतैलामिषमशुभममाभूतषष्ट्यष्टमीषुस्नानंनाशाक्षिवि
श्वैःपरिमिततिथिषुत्रिंशदंकाद्रितुल्ये २

रेषुचेद्भवंतितदासिद्धाःस्युः नंदाशुक्रेबुधेभद्राजयाभौमेशनेर्दिने रिक्तापूर्णागुरौवारेसिद्धाःस्युस्ति-
थयःक्रमात् अमाभूतषष्ठ्यष्टमीषुक्रमेण स्त्रीसेवाक्षौरेतैलामिषंअशुभंवर्ज्यमेव यदुक्तं षष्टीषुतैलंपलमष्टमीषुक्षौरक्रियांचैवचतुर्दशीषु स्त्री-
सेवनंनष्टकलासुपुंसामायुःक्षयार्थंमुनयोवदंति १ आशाक्षिविश्वैः आशादश १० अक्षिणीद्वे २ विश्वेत्रयोदश१३एतैः परिमिततिथिषुदशमीद्वितीयात्रयोदशीषु
त्रिंशत् ३० अंकाः ९ अद्रयः ७ तैःतुल्येतिथौदर्शनवमीसप्तमीषुमलस्नानंनकार्यं तदुक्तंस्नातुर्जनस्यदशमीतनयंत्रयोदशार्थंनिहंत्युभयमेवमपिद्वितीया स

सम्यनिंदुनवमीषुचसंपदिच्छुःस्नायात्कदाचिदपिनामलकैर्मनुष्यः २ दग्धाइति विभूताश्चतुर्दशीरहिताः युग्मतिथयः द्वितीयाचतुर्थीषष्ट्यष्टमी दशमी द्वादश्यः क्रमेणदग्धाःस्युः किंसतितरणौसूर्येवक्ष्यमाणराशियुग्मेगतवतिसति तद्यथा चापमीनेतरणौद्वितीयादग्धा चापमीनमिनिसमाहारद्वंद्वः घटोक्ष्णे कुंभवृषयोस्तरणौगतेचतुर्थीदग्धा अत्रेतरद्वंद्वः कर्काजेकर्किणीमेषेतरणौसतिषष्ठीदग्धा स्त्रीनृयुग्मेकन्यामिथुनयोरष्टमीदग्धा मृगपतिसविषेसिंहवृ श्चिकेरवौदशमीदग्धा तौलिनक्रेतुलामकरे द्वादशीदग्धानिषिद्धा तदुक्तं मीनेचापिद्वितीयाचचतुर्थीवृषकुंभयोः मेषकर्कटयोःषष्ठी कन्यायांमिथुने·

दग्धायुग्माविभूतागतवतितरणौचापमीनेघटोक्ष्णेकर्काजेस्त्रीनृयुग्मेमृगपतिसविषेतौलिनक्रेक्रमेण नंदाद्यारिक्तिकांता स्त्रिरजप्रमुखतःस्युश्चतुर्णांचपूर्णानेष्टासक्रूरराशेःप्रतिपदिचकुहोदंतकाष्ठंनषष्ठ्यां ३

ऽष्टमी दशमी वृश्चिकेसिंहे द्वादशी घटनक्रयोः एताः स्युस्तिथयोदग्धा द्वौद्वौराशिस्थितेरवौ चपरंनंदाद्यारिक्तिकांताश्चतस्त्रस्तिथयः त्रिवारंत्रिरावृत्याअजप्रमुखतोराशीनांस्युः प्राक्नंदामेषस्यभद्रावृष स्यजयामिथुनस्यरिक्तिकाकर्कस्यचतूर्णांराशीनांपूर्णाप्रहरद्वयंद्वयंमेषादीनांपंचम्याः एवंसिंहादीनांचतुर्णांषष्ट्यादयस्तथादशमीसिंहादीनांच- तुर्णांपुनरेकादश्याद्याश्चतस्रोधनुरादिचतुर्णांराशीनांतिथयः पुनः पूर्णापूर्णमासीदर्शौधनुरादीनांभवतः एवंसपादतिथेरेकोराशिराश्याधिक संज्ञेयंसक्रूरराशेः क्रूरेणरविकुजमंदराहूणामेकतमेनसहितोयोराशिस्तत्संबंधिनीयातिथिः सानेष्टा शुभकार्ये चपरंप्रतिपदिकुहौदर्शेषष्ठ्यांदंत

कार्यं न तथाचोक्तं नष्टदुषष्टी प्रतिपत्क धीमान् न जातु दंतोत्कर्षणं विदध्यात् कुर्वन्नवाप्नोति तदासनूनं लक्ष्मीकुलज्ञातिजयोपघातं ३ भेशा इति एते भेशा भानां नक्षत्राणां ईशा ज्ञेयाः ते के दस्रौ अश्विनीकुमारौ अश्विन्या अधिपती अंतकोयमो भरण्याः अग्निः कृत्तिकायाः द्रुहिणो ब्रह्मा रोहिण्याः शशी मृगशीर्षस्य शिवो आर्द्रायाः अत्रेतरेतरद्वंद्वः देवसूः देवान सूते सा देवसूः इति अदितिः पुनर्वसोः इज्यो गुरुः पुष्यस्य सर्पा आश्लेषायाः पित्राख्याः पितरो मघायाः भगः सूर्यविशेषः पूर्वाफाल्गुन्याः अर्यमा उत्तराफाल्गुन्याः रविर्हस्तस्य द्विविषत्सूत्रकारः द्विविषदो देवाः तेषां सूत्रकारो वार्द्धुषिव विश्वकर्मा चित्रायाः अनिलो

भेशा दस्रांतकाग्निद्रुहिणशशिशिवा देवसूरीज्यसर्पाः पित्राख्यः स्युर्भगोथार्यमरविद्विविषत्सूत्रकारानिलाश्च शक्राग्नी मित्र इंद्रो र्निर्ऋतितनुभवो वारिविश्वे विधाता श्रीशो वस्वाख्य यादःपतिरजपदहिर्बुध्न्य पूषाभिधानाः ४

वायुः स्वातेः शक्राग्नी शक्रश्च अग्निश्च शक्राग्नी द्वावपि विशाखायाः मित्रः सूर्यभेदः अनुराधायाः इंद्रो ज्येष्ठायाः निर्ऋतितनुभवो राक्षसाः मूलस्य वारि जलं पूर्वाषाढायाः विश्वेदेवा उत्तराषाढायाः विधाता अभिजितः श्रीशो विष्णुः श्रवणस्य वस्वाख्या वसवो धनिष्ठायाः यादःपतिर्वरुणः शततारकायाः अजपत् अजैकपात् महादेवभेदः पूर्वाभाद्रपदायाः अहिर्बुध्न्य उत्तराभाद्रपदायाः पूषा सूर्यभेदो रेवत्याः इत्यष्टाविंशति देवतास्तन्नाम्ना भानां नामानि कल्प्यानि ४

स्वातिः आदित्यं आदितेरिदमादित्यं पुनर्वसुः हरित्रयं हरिशब्देन हरिभं श्रवणो ग्राह्यः इदं सांकेतिकं शास्त्रं नामैकदेशग्रहणे नामग्रहणं श्रवणत्रयं श्रवणधनिष्ठाशततारा एनत् नक्षत्रपंचकं चरचलसंज्ञं भवति धात्रं रोहिणी उत्तरास्तिस्र एताः ध्रुवाः स्थिराश्च भवंति पितृमघापूर्विकास्तिस्रः अंतकं भरणी एतत्पंचकं क्रूरमुग्रसंज्ञं भवति अथद्वीशं विशाखा अनलं कृत्तिका एते मिश्रसंज्ञे हस्तः ईज्यं पुष्यः अश्वि अश्विनी अभिजित् अयं गणो लघुर्भवति मृगशिरः चित्रा अंत्यं रेवती मैत्रमनुराधा एतत् चतुष्कं मृदु ज्येष्ठा आर्द्रा उरगमाश्लेषा मूलं एतत्तीक्ष्णं उदितं कथितं नामसप्तकं चरचलादि एतत् शशी

स्वात्यादित्यहरित्रयं चरचलं धात्रोत्तराः स्थिराः क्रूरोग्रं पितृपूर्विकांतकमथद्वीशानले मिश्रके हस्तेज्याश्वभिजिल्लघुर्मृगशिरश्चित्रांत्यमैत्रं मृदु ज्येष्ठार्द्रोरगमूलमेतदुदितं तीक्ष्णं शशी नारतः ५

चंद्रः इनः सूर्यः आरो भौमः ततो ज्ञेयं एतदुक्तं भवति चंद्रश्चलश्चरः रविः स्थिरो ध्रुवः भौमः क्रूरोग्रः बुधो मिश्रः गुरुर्लघुः शुक्रो मृदुः शनिस्तीक्ष्णः एवं नक्षत्रनामानि तच्चोक्तं रविः स्थिरः शीतकरश्चरश्च महीज उग्रः शशिजश्च मिश्रः लघुः सुरेज्यो भृगुजो मृदुश्च तीक्ष्णोर्कसूनुः कथितो मुनींद्रैः ५ रवितो रविवारान् क्रमेण सप्तवारेषु एतानि भानि त्यजेत् शुभकार्येष्विति शेषः तत्र रविवारे द्वीशात्त्रीणि विशाखायास्त्रीणि विशाखा अनुराधा ज्येष्ठा इति त्रीणि भानि त्यजेत् सोमवारे उदकोडुतः पूर्वाषाढायास्त्रीणि पूर्वाषाढोत्तराषाढाऽभिजित् भौमवारे वरुणभतो धनिष्ठायास्त्रीणि धनिष्ठा शतभिषक् पूर्वाभाद्रपदास्त्यजेत् बुधवारे पौष्णाद्रेवत्यास्त्रीणि रेवत्यश्विनी भरणीस्त्य-

जेत् गुरुवारेकभाद्रोहिण्यास्त्रीणिरोहिणीमृगार्द्रास्त्यजेत् शुक्रवारेजीवभात् पुष्यात्त्रीणिपुष्याश्लेषामघास्त्यजेत् शनिवारेआर्यम्णात् उत्तराफा-ल्गुन्यास्त्रीणिउत्तराफाल्गुनीहस्तचित्रास्त्यजेत् एतेनउत्पातमृत्युकाणयोगाउक्ताः तथातथैवरवितोद्वेद्वेभेसजेतेकेयममघेभरणीमघेरविवारेत्यजेत् सोमवारेत्वाष्ट्रद्विदैवेचित्राविशाखे भौमवासरेवैश्वार्द्रे उत्तराषाढाऽर्द्रे बुधवारेवसुमूलके धनिष्ठामूलेत्यजेत् गुरुवारेऽनलशतेकृत्तिकाशततारकेत्यजेत् भृगुवारेज्येष्ठाकभेज्येष्ठारोहिण्यौ शनिवारेंबुधद्वयंपूर्वाषाढाद्वयं पूर्वाषाढोत्तराषाढेत्याज्ये अत्रत्याज्यप्रकरणाद्यस्मिन् वारेयत् त्याज्यंतदेवमुक्तं तत्रशनिवारे

द्वीशात्त्रीण्युदकोडुतोवसुभतः पौष्ण्यात्कभाज्जीवभादार्यम्णाद्रवितस्त्यजेद्यममघेत्वाष्ट्रद्विदैवेतथा वैश्वार्द्रेवसुमूलकेऽन
लशतेज्येष्ठाकभेबुद्वयं सूर्येष्टौविदिपंचवारतिथिजान्विश्वान्समस्तेष्विति ६

केचनरेवतींहस्तंचजन्मभंयमघंटयोगाख्यायावदंति तन्निर्मूलं यतः हस्तेमृत्युयोगस्यप्राक्कथनात् प्राचीनाचार्यत्रिविक्रमेणलिखितमस्ति अतः त्रिविक्रममतेशनौत्याज्यंशनेर्द्वेवज्जयाषाढेद्वादशभात्रयंतथातेनाषाढाद्वयंनिषिद्धं अथसूर्येरविवारे प्रथमासप्तमीतिथी ७ अनयोर्योगेष्टौभवंति एवंविदिबुधेतूर्येवारे ४ प्रतिपत्तिथौ अनयोर्योगे पंचत्याज्याः एवंसमस्तेषुरव्यादिवारेषुतिथीवारजान्त्रयोदशत्यजेत् एवद्वादशींरविवारेएकादशींसोमवारे दशमींभौमवासरे नवमींबुधवासरे अष्टमींगुरौ सप्तमींशुक्रे षष्ठीं शनिवारेत्यजेदिति संवर्त्तकक्रकचाबुक्तौ इत्युत्पातमृत्युकाणजन्मभ — यमघंटसंवर्त्तकक्रकचयोगाः ६ ७ ७ ७ ७

रात्रेरर्द्धरात्रीणामर्द्धं द्युयुतंदिनमानेनयुतंकार्यं पश्चात्सपादः पंचदशपलसहिताः चतुर्द्दशघटिकास्ताभिः १४ युक्त्युक्तंकार्यंतदावारप्रवृत्तिः स्यात् षष्टितो
न्यूनेरात्रिशेषे षष्टितोधिके सूर्योदयाद्दर्द्धं ततोवारप्रवृत्तेः सकाशात् होराभवतिकिंलक्षणासार्द्धघटिद्वयासार्द्धंघटिद्वयंयस्याः सासादिनपतेर्दिनवाराद्ग्रहा-
णांहोरा भवति तद्यथा प्रथमादिनविभोः द्वितीयातस्मात्षष्ठस्य ततोपिषष्ठस्य एवंचतुर्विंशतिहोरा अहोरात्रे स्युः तथाचश्रीपतिः वारप्रवृत्तेर्घटिकाद्वि-
निघ्नाः कालारव्यहोरापतयः शरासाः दिनाधिपाद्यारविशुक्रसौम्याः शशांकसौरीज्यकुजाः क्रमेणेति दिनाधिपाद्गणनीयाः तासांमध्येचंद्रबुधजीवसु

रात्र्यर्द्धद्युयुतंसपादमनुयुक्वारप्रवृत्तिस्ततोहोरासार्द्धघटिद्वयादिनपतेःषष्ठस्यषष्ठस्यसा

क्राणांहोराःश्रेष्ठाः रविकुजमंदानांहोराः सामान्याः अतोमध्याः यस्यग्रहस्ययद्वारेकिंचित्कर्मप्रकीर्त्तितं तत्तस्यकालहोरायांसर्वमेवविधायतेइ
तिश्रीइत्युक्तिः अथरवेःसकाशात्यामार्द्धंत्यजेत् कतितमं तुर्याद्रिद्विशराष्ट्रामरसकं तुर्यंचतुर्थंरविवारे सोमवारेऽद्रिसप्तमितं भौमेद्वि २ बुधे
शरमितंपंचमं जीवेअष्टमितं शुक्रवारेराममितंत्रितयं शनिवारेरसमितंषष्ठं इयंवारवेलानिषिद्धा पुनः रवेःसकाशात्तिथ्यंशोमूहूर्त्तः दिनमानस्य
पंचदशभागोमुहूर्त्तः सकुलिकोभवति यस्मेदिवसे कतिमितः मनूत्क्रमसमः मनुत श्चतुर्दशतः उत्क्रमेणव्यस्ततयासमः समसंख्यः सकुलिकोज्ञेयः

रविवारेचतुर्दशोमुहूर्त्तः सोमवारेद्वादशः भौमवारेदशमः बुधवारेष्टमः गुरुवारेषष्ठः शुक्रवारेतुर्यः शनिवारेद्वितीयः निशिरात्रौनिरेकः रवि
रात्रौत्रयोदशः सोमरात्रौचैकादशः भौमरात्रौनवमः बुधरात्रौसप्तमः गुरुरात्रौपंचमः शुक्ररात्रौतृतीयः शनिरात्रौप्रथमः एतेकुलिकाः शुभ

तुर्याद्द्विद्विशराष्टरामरसकंयामार्द्धसुङ्ङ्नेद्र्वेस्तिथ्यंशःकुलिकोमनुक्रमसमोघस्रेनिरेकोनिशि ७

कार्येनिषिद्धाः तथाचोक्तं मन्वर्कदिग्वसुसृतुवेदपक्षौरर्कान्मुहूर्त्तैः कुलिकाभवंति दिवानिरेकोरथयामिनीषुतेगर्हिताः कर्मसुशोभनेषुइति इतिवारप्रवृत्ति
होरार्द्धयामकुलिकाः यदुक्तंश्रीपतिना यस्यग्रहस्यवारेपियत्कर्मपरिकीर्त्तितं तत्तस्यकालहोरायांसर्वमेवविधीयते इति आवश्यकृत्येश्रीपतिवचने ७ ६

शुक्लेइति शुक्लेपक्षेब्धीशमिते चतुरेकादशमितेतिथौ चतुर्थ्येकादश्योः परतः पश्चिमार्द्धेविष्टिः अष्टमीराकयोस्तत्रैवशुक्लेप्रागदलेविष्टिः कृष्णादलेकृ-
ष्णपक्षे त्रिदिक्षुतृतीयादशम्योः पश्चिमार्द्धेविष्टिः सप्तमीभूतयोः परतः कृष्णेप्राकृदलेविष्टिः तस्याः विष्टेः वक्त्रं शरदोर्नगांबुधिवसूत्र्यंगेकयामा
दितः पंचघटिकात्मकंवक्त्रंभवति अत्रमानक्रमेणाविष्ट्योग्राह्याः चतुर्थ्यष्टम्येकादशीपौर्णमासीतृतीयासप्तमीचतुर्दशीषु चतुर्थ्यांपंचमप्रहरेमु
खं अष्टम्यांद्वितीययामादौ एकादश्यांसप्तमयामादौ पूर्णिमायांचतुर्थयामादौ कृष्णात्तृतीयायांअष्टमयामादौ सप्तम्यांतृतीययामादौ दशम्यां

शुक्ले ऽब्धीशमितेतिथौपरदलेप्रागष्टमीराकयोर्विष्टिः कृष्णदलेत्रिदिक्षुपरतः प्राक्सप्तमीभूतयोः तद्वक्त्रंशरदोर्नगांबुधिव
सूत्र्यंगेकयामादितः पुच्छंशस्तमिभेंदुषड्गुणनगद्वीष्वब्धियामात्यये ८

षष्ठयामादौ चतुर्दश्यांप्रथमयामादौ पंचघट्यात्मकंविष्टे
र्मुखंभवति तत्पुच्छंतत्कदाभवेत् चतुर्थीतः क्रमेण इभेंदुषड्गुणनगद्वीष्वब्धियामात्यये चतुर्थ्यष्टमयामांते घटिकात्मकंविष्टेः पुच्छम् अष्टम्यांप्रथ
मयामांते एकादश्यांषष्ठयामांते पौर्णमास्यांतृतीययामांते सप्तम्यांसप्तमयामांते दशम्यांद्वितीययामांतेविष्टेः पुच्छं चतुर्दश्यांचतुर्थयामांतेवि-
ष्टेः पुच्छम् तथाचोक्तम् दशम्यामष्टम्यांप्रथमघटिकापंचकपरंहरिद्यः सप्तम्योस्त्रिदशघटिकांतत्रिघटिकम् तृतीयाराकायांकुयमघटिकाभ्यः
परतरंध्रुवंविष्टेः पुच्छंशिवतिथिचतुर्थ्योस्तविगमे १ विष्टेरत्नमालायामपिमुखमेवयामादौकथितमस्ति तदंगमपि नाड्यरूपपंचवदनंगलक

स्तंधेकावक्षेदशैकसहितायघटिकाश्चतस्रः नाभिः कटीषडथपुच्छलतात्रतिस्रोविष्टेर्बुधैर्निगदितोंऽगविभागएषः १ उक्तंच मुखेवकार्यध्वस्तिर्भवति भरणंत्रापिगलकेधनेहानिर्वक्षःस्थलकटिनरबुद्धिविलयः कलिर्नाभीदेशोविजयमथपुच्छेनिगदितंशरीरेभद्रायाःएथगितिफलंपूर्वसुनिभिः १ अथविष्टेः स्वरूपमाह देत्येंद्रैः समरेसुरेषुविजितेष्वीशःक्रुधादृष्टवान् स्वंकार्यंकलिनिर्गतारवरसुखीलांगूलिनीचन्निपात् विष्टिःसप्तभुजामृगेंद्रगलकाक्षामोदरीप्रेतगादैत्यघ्नीसुदितैः सुरैस्तुकरणप्रांतेनियुक्तासदाइतिविष्टिः ८ रौद्रेति एतेदिनेतिथिलवाःमुहूर्ताभवंति दिनमानस्यपंचदशोवि

रुद्राशीविषमित्रपितृवसुवार्विश्वेभिजित्कंद्रपाःशक्राग्नीनिर्ऋतिर्दिनेतिथिलवाःपाश्यर्यमाख्योभगः रात्रौशंभुरजां
घ्रितस्त्रियमगादास्त्राद्विरौद्राहरिः सूर्यस्त्वाष्ट्रसमीरणानिजभजेकार्येस्मृताःसिद्धिदाः ९

भागःमुहूर्तोज्ञेयः समुहूर्तःक्रमेण रुद्रादीनांपंचदशदेवतानांवातत्तन्नामकनक्षत्रसंबंधीभवति तेके रुद्राशीविषइत्यादयः सर्वदाप्रथममुहूर्तः रुद्रस्यभवतिआर्द्रासंबंधीत्यर्थः द्वितीय आशीविषाणांसर्पाणांआश्लेषासंबंधीभवति तृतीयः मित्रंअनुराधासंबंधीभवति चतुर्थःपितृदैवतः पितृमघासंबंधीभवति पंचमोवसुदैवतोधनिष्ठासंबंधीभवति षष्ठोवार्दैवतः पूर्वाषाढासंबंधीभवति सप्तमोविश्वदैवतउत्तराषाढासंबंधीभवति अष्टमोऽभिजिन्मुहूर्तः नवमः कमदेवतोरोहिणीसंबंधीभवति दशमः इंद्रदैवतोज्येष्ठासंबंधीभवति एकादशः शक्राग्निदैवतोविशाखासंबंधीभवति द्वादशोनैर्ऋतिदैवतोमूल ५

संबंधी भवति त्रयोदशः पाशिदैवतो वरुणदैवतः शततारकासंबंधी भवति चतुर्दशो यमदैवतो उत्तराफल्गुनीसंबंधी भवति पंचदशो भगदैवतः पूर्वाफल्गुनीसंबंधी भवति एते दिने मुहूर्ता भवंति रात्रौ शंभुरार्द्रा अजांघ्रितः पूर्वाभाद्रपदा तस्मायं पूर्वाभाद्रपदा उत्तराभाद्रपदा रेवती दास्त्वाद्विरौद्रा आर्द्रारहिताः सप्त अश्विनीभरणीकृत्तिकारोहिणीमृगशिरः पुनर्वसुः पुष्यः हरिः श्रवणः सूर्यो हस्तः त्वाष्ट्रं चित्रा समीरणो वायुदैवतः स्वाती एते मुहूर्ताः निजभजे स्वनक्षत्रभवे कार्ये सिद्धिदाः स्मृताः आवश्यकं कार्यं यन्नक्षत्रे कथितं वर्तते तस्य मुहूर्ते कर्तव्यम् इति दिनरात्रिभवास्त्रिंशन्मुहूर्ताः तदुक्तं रत्नमालायाम्

लग्नाढ्यास्तिथयो गता नवहृता रवत्रीष्वगे शेषके नस्यात्पंचकमेकके मृतिरथो द्वौ नाशनं स्याद्द्वयोः तुर्ये राजकमंगके तु तिरथो ष्टापी रुगाख्यं त्यजेदुद्वाहे सदनेषु सेवनविधौ मार्गे व्रतेषु क्रमात् १०

यस्मिन्धिष्ण्ये यच्च कर्मोपदिष्टं तद्देवत्ये तन्मुहूर्तेपि कार्यमिति लोके हि स्वामिसदृशं सेवके प्रयुज्यमानं दृश्यते अतो देवतासदृष्टं तन्नक्षत्रे कार्यमिति तिथ्यादिषु पंचकं वर्ण्यते तथा च दृष्टयोगदर्शनं ९ लग्नाढ्येति मासादितो यास्तिथयः गताः तिथयो लग्नाढ्याः कार्याः आरंभकालीनलग्नांकेन युताः भवंत्तताः नवभिर्हृते भक्ते ख० त्रि ३ इषु ५ अगे ७ शेषके पंचकं भवति एककेशेषे मृतिर्भवति मृत्युपंचकं भवेत् अथ द्वयोः शेषयोः सतोः द्वौताशनं वन्हिपंचकं भवेत् तुर्ये चतुष्के शेषके राजपंचकं भवति अंगके षट् शेषे तु तिश्चोरपंचकं भवेत् अथाष्टाभिः शेषैः रुगाख्यं भवेत् रोगपंचकं भवति एतानि क्रमात् उद्वाहे विवाहे मृतिपंचकं सदनेषु हुताशनपंचकं सेवाविधौ राजपंच

कम् मार्गेऽल्हतिपंचकंत्याज्यं व्रतेषुव्रतबंधादिषुरुगाख्यंरोगपंच कंत्यजेत् उक्तंच व्रतेरोगंपथेचौरंसेवायांराजपंचकम् गृहेचाग्निंपरि-
त्यज्यविवाहेमृत्युपंचकम् १ इतिबाणपंचकम् १० गंमूव्योति एषुयोगेषु पुराःप्रथमाः एताःनाडीःत्यजेत् केषुकाः गंगंडः शूशूलः व्याव्याघातः
अतिअतिगंडः विविष्कंभः ववज्रयोगः एषुपुरापूर्वाः षट्शरनवअंगत्रित्रिनाडीःत्यजेत् शुभे शुभकार्ये सर्वौन्वितौ अंतव्यतीपातकौत्यजेत्

गंमूव्यातिविवेषु षट्शरनवांगत्रित्रिनाडीःपुरासर्वात्यव्यतिपातकौचपरिघार्धपूर्वमुझ्झेच्छुभे योगेष्वेष्विनभाद्विधुर्विषमभे
विध्यृक्षयुक्तेर्गलास्याच्चंडीश्वरशस्त्रपातइहसागंशूव्यवैहांतभे ११

वैधृतिव्यतीपातौ सर्वावपिपूर्वंपरिघार्धंपरिघस्यपूर्वार्धंइत्य-
र्थः एषुप्रागुक्तयोगेषु गंमूव्यातिविववेव्यपरियेषुसत्सुइनभात् सूर्यभात् विध्यृक्षयुक्ते अभिजित्तत्सहितगणितेसति विषमभेयदा विधुर्भवति
तदाऽर्गलाएकार्गलयोगोभवति इहचंडीश्वरशस्त्रपातःस्यात् इहकसासाध्यःगंगंडःशूशूलः व्यव्यतीपातः वैवैधृतिः हहर्षणः एषांयोगानांअंतेपदं ६
तत्र तथाचोक्तं साध्यहर्षणशूलानांवैधृतिव्यतिपातयोः यद्गंडस्यचांतेस्यान्तत्सातेननिपातितं एवमेवैकार्गलहरायुधयोगौकथितौ इत्येकार्गलचंडा
युधौ ११

दिनऋक्षाद्भौमार्क्यगूनांरविभौमशनिराहूणांपुरः पृष्ठस्तात् एतेषुभेषुनक्षत्रेषुलत्तास्यात् एतेषुकेषु अर्कत्रीभनरवेषु अर्काद्द्वादशत्रीणि इभा अष्टौनरवाविंश
तिरवेषु अत्राशुभानांलत्ताकथिता यतः उडुनिनिर्दलिते शुभलत्तयानफलमस्तिवलस्यलत्तया अशुभलत्तितमत्तिन दूढयोर्द्धनस्तुनानस्कृनायकरंपरं १ त
परंतिर्यगूर्ध्वगतिकाः सप्तरेखाः लिखेत् अत्रैकरेखागतयोर्ग्रहयोः सतोर्वेधोभवति सवेधोव्रतबंधदेवप्रतिष्ठाचौलादिषुत्याज्यः अथोद्वहविधौविवाहेपं
चपंचऊर्द्धतिर्यग्गतारेखालिखेत् द्वेद्वेरेखेकोणगतेलेख्ये अत्रापिरेखगोग्रहः कोणस्यईशकोणस्थद्विमितायारेखायाः तत्राग्निभान्स्थितोविध्यति

अर्कत्रीभनरनेषुभेषुदिनऋक्षाद्भौमार्क्यगूनांपुरोलत्तासप्ततिर्यगूर्ध्वगतिकारेखालिखेदग्निभात् वेधोत्रैकगयोरयोद्वहविधौपंचोर्द्ध
तिर्यग्गताद्वेद्वेकोणगतेत्रविध्यति खगःकोणंद्विरेखेग्निभात् १२

तत्रसर्वेषामेववेधस्त्याज्यः तत्ररोहिण्यांकथंवेधःस्यात् अभिजिति
ग्रहेस्थितेरोहिणीविद्धाभवति अभिजित्कथंभवति वैश्वदेवतःचतुर्लवःश्रवणस्यपंचमः १५ लवः इह अभिजित्मितिः उत्तराषाढायाःपांत्योंघ्रिःश्रव
णस्यपंचदशोविभागः एतद् भिजिद्भवति तत्रस्थेखेटेरोहिणीनांवेधोभवति इतिलत्तापंच शलाकावेधविचारः १२ स्वकीयजन्मभात्जन्म
नक्षत्रात् दिनभोन्मितिः दिननक्षत्रस्यसंख्याकार्या सानवहृतानवभिर्हृताकार्याशेषाशेषमितातारा भवति तत्रनवताराः शेषाःकस्माद्भवंतिशून्यशेषं
मिः तः नवस्कृत्रिवाणाद्रयस्तृतीयापंचमीसप्तम्योनेष्टाः शुभान तथाचोक्तं जन्मसंपद्विपत्क्षेमाःप्रत्यरिः साधकावधा मैत्रातिमैत्रातारा स्युस्त्रिधा

हस्तान्न्वैवहि १ तद्बलतोविधुः ताराबलाद्विधुः फलदोभवति यादृशीयद्दिनेताराभवति तद्दिनेचंद्रस्तादृशंफलंददाति विधुबलादर्कः यादृशेचंद्रे
सूर्यः संक्रमणंकरोति तादृशंफलंसूर्योददाति अर्कवीर्यात् सूर्यबलात् परेभौमादयः षट् संक्रमेणराशिसंक्रमेण फलदाज्ञेयाः यादृशेसूर्येभौमबुधगुरुशु
क्रशनिराहवो राशिसंक्रमणंकुर्वंति तादृशं सग्रहः फलंददाति तुपुनः गमेगमने सूर्यर्क्षतः सूर्यभात् चंद्रभं यावत्तमंभवति तदगैः सप्तभिः भक्ताशे
षंकार्यं त्रिरसेत्रिरसमिते शेषेभ्रमः भ्रमणयोगोभवति अंबरयमे शून्यद्विशेषे अडलोयोगो भवति भ्रमोप्यशुभ अडलोप्यशुभः १२ इतित्याज्यप्रकरणं

जन्मर्क्षाद्दिनभान्मितिर्नवहृता स्ताराश्चिबाणाद्रयोनेष्टास्तद्बलतो विधुर्विधुबलादर्कोऽर्कवीर्यात्परे ज्ञेयाः संक्रमणेफला-
यतुगमे सूर्यर्क्षतश्चंद्रभं भक्ताऽगैस्त्रिरसे भ्रमोंऽबरयमे शेषेऽशुभश्चाडलः १३ रेवत्यांस्थिरमैत्रमूलमृगभेस्वातौमघायां-
करेसौम्येऽर्केशफरोज्झितेतनुषडष्टेंदुंखलैर्युग्यतम्

रेवत्यांस्थिराणि रोहिण्युत्तरभानि मैत्रमनुराधा मूलंमृगभं एषांसमाहारः
तस्मिन्स्वातौमघायां करे हस्ते पुनः क्व सौम्यर्के सौम्यायनगतेरवौ किंलक्षणेसौम्यायने शफरोज्झिते शफरोमीनस्तदुज्झितेऽर्केणरहितेगो
धूलि कंलग्नंकुर्यात् किंकृत्वा तनुषडष्टेंदुंत्यक्त्वा तनोषष्ठेऽष्टमेचंद्रंत्यक्त्वा खलैः सूर्यभौमशनिराहुभिर्युक्तंयुक्तं हतंलत्तितं विद्धं पंचशलाक ७
चक्रेविद्धं भंनक्षत्रंत्यक्त्वा कुलिकोमनुक्रमसम इत्यादि अर्गलाएकार्गलयोगः योगेष्वेषिनभादित्यादि अपमतुल्यांक्रांतिसाम्यंत्यक्त्वा कां-

त्तिसाम्यंतु ब्रह्मतुल्येपाताधिकारेसमायाति अन्यम्भ शुक्लेरवाब्धि ४० घटीषष्टिपातोध्रुव स्यादिन्द्र १० पि मत्स्यद्वंगो ९ पलैर्हीनः स्वाद्वितिष्यु-
न्मितान्त्छकात् १५७० कुहूममावास्यांरिक्तां अमासांनिध्यात्कृष्णांचतुर्दशींपक्षांतं प्रतिपदं तदुक्तं अमातिथिः पार्श्वतिथिद्वयेनसमंनमांगल्यमु-
पादधातीति विष्टिंभद्रांत्यक्त्वायामदलंतुर्यांद्रिद्विशराष्टमरसकमित्यादियामदलंत्यक्त्वेत्यर्थः कुयोगोमृत्युयमघंटादिः कुदिनमवमंतमपि
त्यक्त्वा विवाहोभवति पुनःक्व शफरोज्झितेमीनसंक्रांतिरहितेसौम्ये ऽर्केउत्तरायणगेसूर्ये अत्रोत्तरायणाग्रहणंसौरमासादरार्थं तथाचोक्तं
रवेरमीनामकरादिषड्गृहीकरग्रहेमंगलकृन्मृगीदृशामितिकेशवार्कः तथापि सौम्यायनवशात्पौषचैत्रयोः शुक्लपक्षेनविवाहः तथाचोक्तम्

विद्धं भंकुलिकार्गलापमतुलांरिक्तांकुहूंपक्षांतंविष्टिंयामदलंकुयोगकुदिनंत्यक्त्वाविवाहःशुभः १४

विवाहप्रकाशे पौषेमृगगेसूर्येपरपक्षेचैत्रमास्यजर्क्षेर्के उद्वाहःकर्तव्योन्यथाभवेत्तावनिष्टफलौ १ तत्रैवकार्तिकमासेशुद्धिंगुरोर्विलोक्यरवेश्चंद्रब
लं अक्रूरयुतेधिष्ण्येदेवोत्थानाद्विवाहस्यात् २ अत्रग्रंथांतरेवक्ष्यमाणश्लोके चापार्कमीनार्कयाम्यायनसिंहस्थगुरुभृगुजीवयोरस्तबाल्यवृद्ध
त्वातिचारवक्रसमये परंसत्कार्यंनस्यादितिवक्ष्यति तस्मादत्रविवाहादौगुरुशुक्रयोःशिशुत्वजरत्वेत्याज्ये तद्यथा शिशुजरत्वमाह शिशु
ज्वरत्वमहान्युदयोऽस्तयोर्दशचतुर्दशचांगिरसःस्फुटम् उशनसोदशपंचचपश्चिमेगतिवशात्त्रिदशाहमपश्चिमे १ अष्टाविंशतिवासरान्सुर

गुरोर्वक्रातिचारे त्यजेत्सिंहे पंच नवांशकान् मृगगते पंचैव नीचांशकान् बाले वृद्ध दशांगते ऽथ नियतं लुप्तारव्यसंवत्सरं सर्वं चास्तमिते स भीतिरहितः
प्रोक्तं हि गर्गेणच २ अष्टमे द्वादशे वर्षे मासत्रयगते सति विवाहं तत्र कुर्वीत गर्भमासविमिश्रणात् १ इत्यादि सर्वं विचार्य फलं प्रकर्तव्यम् १४ अथ घ
टिकालग्नमाह लग्न इति पूर्वश्लोके एषु योगेषु विवाहः शुभ इत्युक्तमस्ति तत्र लग्नशुद्धिमाह लग्ने मानवराशिगे मनुष्यराशिलग्ने मनुष्यराशय इ-
ति तुला मिथुन प्रमदा धनुः प्रथमखंडम खंड फलं जगुः वामानवराशिगे नवलवे नवांशे लग्नस्य त्रिंशदंशाः तेषां नवांशः अंश ३ कला २० एवं

लग्ने मानवराशिगे नवलवे मंदाच्चतुर्वर्जिते षष्ठे लग्नपचंद्रशुक्ररहिते रंध्रे विधोः पंचभिः हीने थे इंदुगुरू समौ मदगतौ पापोऽथ कर्तर्य-
पि त्याज्या लग्नशशांकयोस्तनुलवौ तन्नाथदृष्टौ शुभौ १५ राशौ नव नवांशा भवंति तेषां नवांशानां गणना चतुर्भ्यो राशिभ्यो भवति तद्य
था मेषान्मेषाश्वसिंहानां नक्राद्वृषमृगस्त्रियः धटात्कुंभत्रिजूकानां कर्कान्मीनालिकर्किणाम् १ अनेन क्रमेण मानवराशिलवे मिथुनकन्यातुला
धनुषामन्यतमस्य नवांशे लग्नगे किंभूते लग्ने आर्केः शनेः सकाशात् चतुर्थे ग्रहवर्जिते शनिरविचंद्रभौमवर्जिते षष्ठे भवने चंद्र लग्नपतिशुक्ररहिते ष
ष्ठे लग्नपो भंगदः चंद्रशुक्रौ च अष्टमे विधोः सकाशात्पंचभिर्हीने चंद्रमंगलबुधगुरुशुक्रवर्ज्या इत्यर्थः अथेंदुगुरू चंद्रजीवौ तत्र लग्ने मदगतौ सप्तमग ८
तौ समौ न निषिद्धौ न श्रेष्ठौ अन्ये ग्रहास्तु यहाजामित्रे भंगदाः तथा चोक्तं त्रिविक्रमाचार्यैः त्याज्या लग्ने ऽब्धयो मंदात्षष्ठे शुक्रेंदुलग्नपाः रंध्रे चंद्रादयः पंच स

समे ऽजगुरू समौ १ अथ लग्नशशांकयोः पापोत्यकर्त रीत्याज्या लग्नं पापद्वयमध्ये भवति चंद्रो वा पापद्वयमध्ये भवति एतद्द्वयं त्याज्यं तदुक्तम् खल-
कृतानुरोहिणिनाथयोर्हरधराविधुरांकुरुतेवधूम् तनुलवौ लग्नवंशौ तन्माथदृष्टौ शुभौ १५ इति विवाहमुहूर्तः॥ ॥ स्वाताविति एषु
योगेषु वध्वा नवोढायाः गृहप्रवेशः शुभो भवति स्वातौ मूल लघु ध्रुवे मूलं लघूनि च हस्तेज्याश्व्यभिजि तानि ध्रुवाणि च रोहिण्युत्तरात्रयं एषां स-
माहारस्तत्र मृदुमघाकर्णे मृदूनि मृगशिरश्चित्रांत्यमैत्राणि च मघा च कर्णं श्रवणश्च एषां समाहारस्तत्र तथा वासवे धनिष्ठायां तत्र त्याज्यमाह रि-

स्वातौ मूल लघु ध्रुवे मृदुमघाकर्णे तथा वासवे रिक्तां प्रोज्झ्य च भद्रिकां रविबुधक्षोणीजवारांस्तथा वध्वा वेश्मनिवेश
नं शुभकरं शुक्रं पुरो दक्षिणं त्यक्त्वा ऽब्दे विषमे द्विरागमविधिर्यात्रातिथौ प्रोक्तभे १६ मासा भाद्रमधूर्जपौषशून्यचयः
पर्वाष्टमीद्वादशी रिक्ताषष्ठिकयान्विता रवलदिनात्युग्रर्क्षमिश्रेंदुभम् क्तां च भद्रिकां च भद्रा तिथिं तथा रविबुधभौमवारान् प्रोज्झ्य-
त्यक्त्वा अथ द्विरागमनमुहूर्तमाह अब्दे विषमे तृतीये पंचमे शुक्रं पुरो दक्षिणं त्यक्त्वा द्विरागमविधिः प्रोक्तः यात्रातिथौ रिक्तावर्जिततिथौ प्रोक्तभगणे स्वा-
तौ मूले त्यादिनोक्ते अत्र देशाचाराद्दीपोत्सवे द्विरागमं कुर्वंति तत्र पठंति न शुक्रदोषो न च जीवदोषस्ताराबलं चंद्रबलं न योज्यं द्विरागमादौ नवकन्यकायादी-
पोत्सवे मंगलमामनंति १६ इति वधूप्रवेशद्विरागमौ॥ मासा इति एते पदार्थाः नवोढायाः प्रथमार्तवे प्रथमरजोदर्शने ऽशुभदा न भवंति एते के भाद्रमधू

जेंपौषश्शुचयोमासाः मधुःचैत्रःऊर्जःकार्तिकः शुचिराषाढः एतेपंचमासाःनेष्टाः पर्वणी पौर्णमासीदर्शौ अष्टमी द्वादशी रिक्ता किंलक्षणाः षष्ठि
कान्विताः षष्ठीसहिताइत्यर्थः स्वल्पदिनानि रविभौमशनिवारानेष्टाः उग्रर्क्षं पितृपूर्विकांतकं मिश्रे द्वीशानले इंद्रभंज्येष्ठा सर्पः आश्लेषा आर्द्राच
परेसंध्या एतेपदार्थाः प्रथमार्तवेनश्शुभदाभवंति एतेष्वेवजायतेतदाकौशिकोक्तांशांतिर्लिखितास्ति साकर्तव्या तदनंतरं तयाऋतुस्नानंकर्तव्यम्-
तत्रशुद्धिमाह रिक्तातिथिरष्टमी तीक्ष्णंज्येष्ठार्द्रोरगमूलम् अश्वि अश्विनी अंत्यंरेवती मघाकृत्तिका कुदिवसंरविभौममंदवारंत्यक्त्वा नदीय स्नस्या

सर्पार्द्राः प्रथमार्त्तवेनसुभदासंध्याचरिक्ताष्टमीतीक्ष्णाश्वांत्यमघानलंकुदिवसंत्यक्त्वातदीयाप्लवः १७ त्यक्त्वामूलमघांत्यमादि
मनिशंश्राद्धस्यधस्रंकुहूंपक्षार्द्धंचचतुर्दशींप्रथमतोरात्रीश्चतस्रोमुदा

अयंआप्लवःस्नानं ऋतुमत्याःमलस्नानंशुभमिति १७ इ-
तिप्रथमार्तवऋतुस्नाने ॥ त्यक्त्वेति आर्त्तवे ऋतुकालेस्त्रीयांयोषितं स्वकीयप्रियतमांमुदाहर्षेणगात् गच्छेत् क समतमीषु समरात्रिषु षष्ठ्य
ष्टमीदशमीद्वादशीचतुर्दशीषु किंकृत्वा प्रथमतः ऋतुकालात् चतस्रोरात्रीः त्यक्त्वाचमूलंमघांरेवतींत्यक्त्वाश्राद्धस्यनैमित्तिकस्य पूर्वरात्रिं तथा तद
होरात्रंचत्यक्त्वा कुहूंअमांचपरंपक्षार्धमष्टमींचतुर्दशींचत्यक्त्वा कसति इंदौशुभेचंद्रबलेसति शोभनैश्चंद्रबुधगुरुशुक्रैः कंटकलग्नतुर्यसप्तमदशम-
स्थैः कोणगैः नवपंचमगैःसद्भिः त्र्यरिभवे तृतीयषष्ठैकादशस्थैः रविकुजमंदैःसद्भिः पुनःक नृयोगेषुजातकोक्तनृयोगेषु ओजर्क्षेपुरुषांशाकेषुबलि

भिर्लग्नार्कगुर्विंदुभि पुंजन्मप्रवदेत् समांशकयुतैर्युग्मेषु तैर्योषितः गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियः इत्यादिभिर्योगैः सामान्येन सौ
मगुरुरविवारे मृगपुनर्वसुपुष्यमूलहस्तश्रवणानामेकतमे नक्षत्रे विषमलग्ने गुरौ त्रिकोणोदयस्थे ऋतुमतीं गच्छेदिति तात्पर्यार्थः १८ इत्याधानम् ॥
मूलेति एषुयोगेषु सीमंतकर्मसंस्कारः एषुकेषु अंगाष्टके षष्ठे ऽष्टमे मासि कुलाचाराद्वा मूलं ईज्यं पुष्यं आदित्यं पुनर्वसुः विष्णुः श्रवणः सूर्यः हस्तं
शशी मृगशिरः एषु नक्षत्रेषु त्रिपंचमिते मासेषु पुंसवनं रक्षाबंधनं कार्यं कुसति तदीशे दक्षे सति तस्य मासस्य तृतीयपंचमषष्ठाष्टममासानां ईशे स्वामिनि

स्वीयां योषितमार्त्तवे समतमी षिंदो शुभे शोभनैः रवेंदैः कंटककोणगैरुभ्यरिभवे पापैर्नृयोगेष्वियात् १८ मूलेज्यादितिविष्णुसूर्य
शशिभे सीमंतमंगाष्टके मासे पुंसवनं त्रिपंचकमिते दक्षे तदीशे विधौ सदृष्टे कुजजीवभानुदिवसे पुंभागलग्ने खलैः षष्ठत्र्यायगतैः शु
भैः कृततपः केंद्रेष्वरिष्फाष्टगैः १९

दक्षे बलवत्तरे सति मासेशाः स्मृजातके प्रोक्ताः कललघनांकुरास्थिचर्मांगजं चेतनायाः सित
कुजजीवसूर्यचंद्रार्किबुधाः परतः उदयपचंद्रसूर्यनाथाः क्रमशो गदिताः शुभाशुभं च मासाधिपतेः सदृशं एतेषामेकतमे बलिनि विधौ चंद्रे सदृष्टे
शुभदृष्टे कुजजीवभानूनामेकतमवारे पुंभागलग्ने विषमलवे लग्नके वा विषमलग्ने खलैः पापैः षष्ठतृतीयलाभगैः शुभैः शोभनैः कृत ५ तप ९ कें
द्रेषु १।४।७।१० गतैः अरिष्फाष्टगैः शुभैः रिष्फं द्वादशं अष्टमं मृत्युभं तत्र गच्छंति ते नोरिष्फाष्टगाः नरिष्फाष्टगैः पुंसवनसीमंते स्तः १९ इति पुंसवनसीमंते

अश्विनीति गभोद्वहजनुः कालेषु गंडांतकं अस्ति तत्कियत्कं भवति तदाह अश्विन्यंत्यभयोः अश्विनीरेवत्योः प्राक्परघटीद्वंद्वं अश्विन्यां प्राक्घटीद्वंद्वं रेवत्यामंत्यं घटीद्वयं एवं चतुर्घटिकात्मकं गंडांतकालो भवति एवं मघायाः प्राक्घटीद्वयं उरगभमाश्लेषा तस्याः प्रांत्यं घटीद्वयं गंडांतकं भवति मूलस्याद्यं घटीद्वयं इंद्रस्य ज्येष्ठायाः प्रांत्यं घटीद्वयं गंडांतं भवति एवं चतुर्घटिकात्मकं गंडांतं भवति अन्यग्रंथे गंडांतं त्रिविधमुक्तम् गंडांतं

अश्विन्यंत्यभयोर्मघोरगभयोर्मूलेंद्रयोः प्राक्परं नाडीद्वंद्वमसद्गमोद्वहजनुः कालेषु गंडांतकम् मैत्रांत्या
निलभध्रुवेंदुषु रवीज्यारेषु सूताप्लवः केंद्रेज्ञेज्यसिते मृदुध्रुवचरक्षिप्रेषु नामेष्टकम् २०

त्रिविधं प्रोक्तं नक्षत्रतिथिराशिजम् नव पंच चतुर्थ्यंते द्व्येकार्द्धघटिकामितम् १ अथ सूतायाः प्लवः स्नानं तत्क मैत्रांत्यानिलभध्रुवेंदुषु मैत्रमनुराधा अंत्यं रेवती अनिलं स्वातिः ध्रुवाणि रोहिण्युत्तराः इंदुः मृगशिरः एतेषु भेषु रवीज्यारेषु रविगुरुमंगलवारेषु ज्ञेज्यसितेषु बुधगुरुशुक्रे केंद्रे सति मृदुध्रुवचरक्षिप्रेषु भेषु मृगशिरश्चित्रांत्यमैत्ररोहिण्युत्तरास्वातिपुनर्वसुश्रवणधनिष्ठाशतभिषक्हस्तपुष्याश्विन्यभिजित्सु- १०
नामकर्म इष्टदं वांछितप्रदं भवति २० इति गंडांत सूतिकास्नान नामकरणानि ॥

पौष्णेति अस्मिन्योगे प्रेंखाधिरोहः शुभः पौष्णेज्याश्विकरद्वय ध्रुवचरेभेषु भौमशनिवर्जितेवारे दंत ३२ अष्टादश १८ षोडश १६ अर्क १२ दश-
मे १० दिने तच्चक्रे तस्याः प्रेंखायाश्चक्रे सूर्यर्क्षात्प्रतिदिशं पंच पंच भानि नगाः ७ मध्ये देयानि शीर्षप्रदेशे पंच शुभाः ताराः भानि दक्षिणे पंच-
मृत्युदाः पश्चिमे पंचकार्श्यंकृतः सौम्ये पंच रुदनं कुर्वंति एताः चतुर्दिक्फलाः मध्यगाः नगाः इष्टदाः इति प्रेंखारोह २१ निष्क्रामइति यः
प्रेंखाधिरूढः तस्य बहिर्निष्क्रमणं भवति त्रितुरीयमासि तृतीये चतुर्थे मासि शिशोः निष्क्रामः सूर्यावेक्षणं शुभं हरिभद्वंद्वे श्रवणद्वये अदितिः

पौष्णेज्याश्विकरद्वय ध्रुवचरेष्वारार्किहीने दिने दंताष्टादश षोडशार्कदशमे प्रेंखावरोहः शुभः तच्चक्रे थ चतुर्दिशं शरमिता
स्तारा नगा मध्यगाः सूर्यर्क्षाच्छुभमृत्युकार्श्यरुदनं दिक्ष्विष्टगा मध्यगाः २१ निष्क्रामस्त्रितुरीयमासि हरिभद्वंद्वेदितीज्येंदुभे-
मैत्राश्व्यंत्यकरे चरोदयलवे भौमार्किरिक्तोज्झिते चित्रापौष्णमृगेंद्रभे लघुचरे रिक्तारसूर्यार्कजान्षष्ठीपक्षतिपर्वजन्मभदिनं त्य
क्त्वा शुभं मुंडनम् २२

पुनर्वसुः इज्यं पुष्यं इंदुभे मृगशीर्षे मैत्रमनुराधा अश्विअश्विभं अंत्यंरेवती करे हस्ते एषु भेषु चरोदयलवे च
रलग्ने मेषकर्कतुलामकराणामेकतमे लग्ने वा तदंशे नवांशे किंलक्षणे भौमार्किरिक्तोज्झिते मंगलशनिवाररिक्तातिथिवर्जिते निष्क्रमणं कार्य
मित्यर्थः अथ चौलकर्माह चित्रापौष्णमृगेंद्रभे लघुचरे मुंडनं चौलं शुभं रिक्तातिथिः आरो भौमः सूर्यः प्रसिद्धः अर्कजो मंदस्तान् वारान् ष-

षष्ठींपक्षतिं प्रतिपदं पर्व पौर्णमासीदर्शौ जन्मभादिनं जन्मनक्षत्रंजन्मदिनंचत्यक्त्वा चौलकर्मकार्यमिति इतिनिष्क्रमणचौले २२ पौष्णेति एषु योगेषु अन्ना शनं बालानामन्नप्राशनंमत पौष्णात्वाष्ट्रलघुध्रुवादितिहरिद्वंद्वंदवेरेवती।चित्रालघुभानि हस्तपुष्याश्विन्यभिजित् ध्रुवाणिरो-हिण्युत्तरा अदितिःपुनर्वसुः हरिद्वंद्वं श्रवणद्वयं ऐंद्वंमृगः एषांसमाहारः तस्मिन्नज्ञेबुधवारे गुरौजीवे शुक्रे त्रिषुवारेषु दर्शअमावास्या अष्टमी हरिदिनंद्वादशी नंदांप्रतिपत्षष्ठ्येकादशीःत्यक्त्वा जनेःजन्मभादिनं जन्मकालस्यलग्नं ऋक्षंराशिस्ताभ्यामष्टमलग्नं उज्झ्य आसमंतादुज्झ्य

पौष्णात्वाष्ट्रलघुध्रुवादितिहरिद्वंद्वेंदवेज्ञेगुरौ शुक्रेदर्शमथाष्टमीहरिदिनंत्यक्त्वाचनंदांजनेः लग्नर्क्षाष्टममुज्झ्यकेंद्रनवधीरं
ध्रांत्यसौम्येषषड्जेंदौरसमासिन्नुःशरमितेस्त्रीणांसदन्नाशनम् २३ मैत्रेज्यर्क्षमृगेंत्यभस्तुतिकरद्वंद्वे पृथक्सद्ग्रहैरुन्यायेः
गेगुरुसंयुतेखलखगैर्हीने ऽथसौम्ये ऽयने

केंद्रनवधीरंध्रांत्यसौम्येसति प्रथमतुर्यसप्तमदशमनवमपंचमाष्टमद्वादशभवनेषु सौम्य ग्रहयोगे अष्टमषष्ठरहितेविधौ षष्ठेऽष्टमेमासिन्नुःपुरुषस्यस्त्रीणांकन्यानांशरमितेपंचमेमासिप्रथमान्नप्राशनंसदिति इत्यन्नप्राशनम् २३ अथक्षौ रकर्म त्वाष्ट्राश्विपौष्णामृगपुष्यकरेंद्रभंचचौलंचरेषुचबुधेंदुकवीज्यवारे कुर्यात क्रूरादिकशूभंप्रविहायरिक्तांपक्षांत पर्वदिनमेवनिशांचसंध्यां ११
१ मैत्रोत्तराविधिभव ह्रिभपितृभेषुबाणा ५ ब्धि ४ नाग ८ रसवह्निमितांश्चघस्रान् क्षौरीनरोभवतिचेच्चतुराननेनतुल्योनजीवतिमृशंशरदंब

लग्नः २ भानुर्मासि क्षपयति नयास सप्तमार्तंडसूनुः भौमश्चाष्टौ वितरति शशभं बोधनः पंच मासान् सप्तैवेंदो दश सुरगुरौ शुक्र एकादशेति प्राहुर्गर्ग प्रमुख मुनयः क्षौरकार्येषु नूनम् ३ त्वाष्ट्रं चित्रा अश्वि अश्विनी पौष्णं रेवती मृगः मृगशिरः पुष्यं करे हस्ते इंद्रः ज्येष्ठा चरेषु स्वाती पुनर्वसु श्रवण धनिष्ठा शतभिषजः तेषु चंद्र बुध गुरु शुक्र वारेषु क्षौरं कार्यम् किं कृत्वा मैत्रो ऽनुराधा विधिभं रोहिणी वन्हिभं कृत्तिका पितृभं मघा एतेनेष्टाः तान् त्यक्त्वा पक्षांतं प्रतिपत् पर्व अमावास्या पौर्णमास्यौ च परं रिक्तां विहाय रविकुजमंदान् त्यक्त्वा क्षौरं कार्यं मैत्रेति अस्मिन्योगे श्रवो वेधः

आजे ऽब्दे मधु पौष जन्म भ दिनं मासं च हित्वा श्रवो वेधः सन्न थ दस्र पूष वसु भे भूषाकरात्सं च के २४ त्री ३ धु ५ न्य ३ क्षि २ नगा ७
क्षि २ चंद्र १ गुण ३ भू १ धिष्ण्यानि सूर्यर्क्षतः सूर्यो सृग्भृगु राहु विच्छनि गुरु ग्लौ केतुदेवानि च सन् कर्णवेधः शुभः क्व मैत्रेज्यर्क्षमृगे अनुराधा पुष्य मृगशीर्षे अंत्यभ श्रुति कर द्वंद्वे पृथगिति रेवत्याः द्वयं श्रुति द्वयं करद्वयं सद्ग्रहैः व्याये तृतीयैकादशे सद्भिः अंगे लग्ने गुरुसंयुते खलखगैः पापग्रहैः हीने लग्ने सौम्ये ऽयने सौम्यायने ओजे ऽब्दे विषमवर्षे मधुश्चैत्रः पौषः जन्मभ दिनं मासं च एतानि त्यक्त्वा कर्णवेधः शुभः अथ कर्णवेधे भूषा धार्या तत्राह दस्र मश्विनी पूष भं रेवती वसु भं धनिष्ठा तत्र करात् हस्तात् संचके हस्त चित्रा स्वाती विशाखा अनुराधासु भूषा कर्णवेध भूषा वलयादि लोकप्रसिद्धं चूडा इत्यादि धार्यम् तत्र चक्रं वर्तते इति कर्णवेध भूषे २४ त्रीषिति पाणिवलये शंखभूषणे सूर्यर्क्षतः सूर्यभात् त्रि पंच त्रि दिसमद्वो

कस्येकधिष्ण्यानि सूर्यासृग्भृगुराहुविच्छनिगुरुग्लौकेतुदैवानि भवंति प्रथमं सूर्यस्य त्रीणि असृजो भौमस्य पंच भृगोस्त्रीणि राहोरक्षिद्वे विदो
बुधस्य नगाः सप्त शनेरक्षिणी द्वे गुरोरेकं ग्लावश्चंद्रस्य त्रीणि केतोः भूरेकं एतानि धिष्ण्यानि वर्त्तंते तन्मध्ये सौम्यर्क्षाणि चंद्रबुधजीवशुक्रभानि भवंति
चपरं कर्णत्रये श्रवणत्रये अश्व्याख्ये अश्विन्यां अनिले स्वातौ पित्र्ये मघायां भाग्ये पूर्वाफल्गुन्यां मृगे ईशभे आर्द्रायां द्विदयिते विशाखायां सौम्येषु सौ
म्यवारेषु बुधगुरुशुक्रेषु इनेरविवारे कामठं कमठपृष्ठजवलयानि धार्याणि इति चूडाचक्रम् २५ हस्तादीति एषु योगेषु मौंजी ब्राह्मणानां मेखलाबंधः
सौम्यर्क्षाणि शुभानि पाणिवलये कर्णत्रये श्वानिले पित्र्ये भाग्य मृगेशभे द्विदयिते सौम्ये षिने कामठम् २५ हस्तादित्रितयेंत्यह
यदितिभे द्वंद्वे पृथक् चंद्रभे शुक्रेज्येंदुबले रवलेंद्वितनुं षष्ठेंदुमंत्यारि ॰म् शुक्रं रंध्रखगान् विहाय धवले पक्षे द्वितीयाद्वये
पंचम्यां दशमीत्रये शुभलवे मौंजीतपः पंचके २६
श्रेष्ठः क्व हस्तादित्रितये अंत्यहारि आदितिद्वंद्वे पृथक् पुनर्वसू पुष्ये रेवत्यश्वि-
न्योः श्रवणधनिष्ठे तत्र चंद्रभे मृगशीर्षे शुक्रेज्येंदुबले गुरुशुक्रचंद्राणां गोचरबले तपः पंचके माघादिपंचमासेषु पुनः क्व धवलपक्षे शुक्लपक्षे द्विती
याद्वये द्वितीयातृतीययोः पंचम्यां दशमीत्रये दशम्येकादशीद्वादशीषु शुभलवे सौम्यलवे किंभूता षष्ठेंदुखलेंद्वितनुं खलैः रविभौमशनिरा-
हुभिरिंदुना च इतां प्राप्तां तनुं लग्नं विहाय अंत्यारिगं द्वादशारिपुभावे शुक्रं विहाय रंध्रखगान् अष्टमभावे सर्वे खगान् विहाय मौंजी यज्ञोपवीतकर्म- १२
कार्या इति मौंजी २६ ५ ७

मूलेइति एषुयोगेषुशिशोर्बालस्यविद्योद्यमोविद्यारंभः शुभः एषुकेषु मूलेऽश्वे अश्विन्यां मृगपंचके मृगार्द्रापुनर्वसूपुष्याश्लेषासु करात्हस्तात्त्रये
हस्तचित्रास्वातिषु कर्णेश्रवणे त्रिपूर्वासुतिसृषुपूर्वासुच एषु भेषुविच्छुक्रेज्यार्कदिनेषुबुधशुक्रगुरुरविवारेषु पंचमकेऽब्दे किंलक्षणे पुरादिनपूर्वे
तिथिषुतायेअनध्यायाः रिक्ताश्चतद्रहिते अष्टमीनवमीत्रयोदशीचतुर्दश्यमापूर्णिमाप्रतिपच्चतुर्थ्योनिषिद्धाः त्रयोदशीचतुर्थंचसप्तम्यादिदिनत्र
यं चतुर्थीचतथात्याज्या अष्टावेतेगलग्रहाः १ अथऐंदवेमृगे हौताशेकृत्तिकायां तिसृषुउत्तरासु धनुर्विद्याभ्यासोभवेत् इतिविद्यारंभः २७ पौष्णो

मूलेऽश्वेमृगपंचकेत्रिषुशरात्कर्णेत्रिपूर्वासुविच्छुक्रेज्यार्कदिनेपुरादिनयुतानध्यायरिक्तोज्झिते अब्देपंचमकेशिशोरतिशु
भोविद्योद्यमोऽथैंदवेहौताशेतिसृषूत्तरासुचधनुर्विद्यानविद्याभवेत् २७ पौष्णोऽश्वेकरपंचकेचवसुभेचैलंबुधादित्रयेपुंसां
पुष्यपुनर्वसुस्थिरयुतेस्याच्छोभनंसत्तिथौ

इति एषुयोगेषुचैलंवस्त्रधारणंशोभनं पौष्णेरेवत्यां अश्वेअश्विन्यां करपंचके हस्तादि
पंचके हस्तचित्रास्वातीविशाखानुराधाः चपरं वसुभेधनिष्ठायां बुधादित्रयेबुधगुरुभृगुवारे रिक्तावर्जिततिथौ पुंसांपुरुषाणां पुष्यपुनर्वसुस्थिर
युते रोहिण्युत्तरात्रये वस्त्रधारणंसत् तच्चक्रेतद्वस्त्रस्यचक्रेनवधानवभागेकृते कोणेषुचतुष्कोणेषु मध्यत्रिकोष्ठेषु दशापाशेकोष्ठद्वये-
सुरासुरनरावसंति चतुष्कोणेसुरावसंति मध्यकोष्ठत्रयेअसुरावसंति दशापाशेप्रांतेशेषविभागेकोष्ठेनरावसंति तत्रपंकांजनादिकं पंक-

स्ववांजनस्य प्रथमंधारणात् अंकादिकंचिन्हादिकंभवति आदिशब्देनदग्धेफाटिते शुभनेष्टशोभनफलंज्ञेयं देवांशेशुभं रक्षोंशेनेष्टंमनुष्यांशे-
शोभनफलं अत्रस्त्रीणांवस्त्रसाहचर्यात् भूषणाद्यपिधारयेत् तथाचोक्तं करादिपंचकेश्विभेसपौष्णवासवेस्मृता धृतिश्चशंखकांचनप्रवाल
रक्तवाससां १ सज्जनवल्लभे नासत्यपौष्णवसुभेकरपंचकेषुमार्तंडभौमगुरुदानवमंत्रिवारैः मुक्तासुवर्णमणिविद्रुमशंखदंतरक्तांबराणि
विधृतानिभवंतिसिद्ध्यै १ इतिवस्त्रम् २८ उद्वाहइति उद्वाहेविवाहकालेवसुभागधेयकरणेपि वसुधनं तस्यविभागकरणकालेपिअग्न्या

तच्चक्रेनवधासुरासुरनराः कोणेषुमध्येदशाःपाशेस्युःशुभनेष्टशोभनफलंपंकांजनांकादिकम् २८ उद्वाहेवसुभागधे
यकरणेऽग्न्याधानमिंद्राग्निभेशाक्राग्नेयमृगध्रुवांत्यगुरुभेलग्नेजलर्क्षोज्झिते चंद्रेकोणचतुष्टयोपचयगैरार्कारजीवेंदुभिः
शेषैश्चोपचयस्थितैरमृतिगैः खेटैःशुभाप्त्यैभवेत् २९

धानंकर्तव्यं कइंद्राग्निभेविशाखायां शाक्रंज्येष्ठा आग्नेयंकृत्तिकामृगः
ध्रुवाणिरोहिण्युत्तरात्रयं अंत्यंरेवती गुरुभेपुष्ये लग्नेजलर्क्षोज्झिते मीनकर्कमकरेभ्योऽन्यलग्ने चंद्रेजलराशिरहिते कोणंत्रिकोणं ५।९ च
तुष्टयानि १।४।७।१० कंटककेंद्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानां उपचयानिषष्ठलाभतृतीयभानि एतेषुअर्कारजीवेंदुभिःसद्भिः 
शेषैः शेषग्रहैः बुधशुक्रशनिभिःउपचयस्थितैःसर्वैःअमृतिगैःअष्टमभावरहितैःअग्न्याधानंशुभाप्त्यैभवेत् इत्यग्न्याधानम् २९ ६

ज्येष्ठायामिति एषुयोगेषुभूपाभिषेकः क ज्येष्ठायांहरिभेश्रवणे मृदूनिमृगचित्रारेवती मैत्राणि ध्रुवाणि रोहिण्युत्तरर्क्षाणि लघूनिहस्तपुष्या-
श्विन्यभिजित् तेषु पाकपः तत्कालिकदशानाथः क्ष्माजोभौमः अर्कोरविः उदयजन्मपैरिति जन्मलग्नेशोजन्मराशीशः एभिःसर्वैः ओजस्विभिः ब
लिष्ठैः शुभस्थानस्थैर्वास्वोच्चस्वर्क्षत्रिकोणस्वनवांशस्थैः वानेजस्विभिः उदितैः स्थिरतनौस्थिरलग्ने वृषसिंहकुंभानामेकतमेवाशीर्षोद-
येलग्ने युग्मस्त्रीसिंहकुंभालितुलाशीर्षोदयःस्मृताः एतेषामेकतमेलग्ने सद्घते शुभग्रहयुते अत्रसद्दिनेइतिपाठेसोमबुधगुरुभृगुवारेषु परं

ज्येष्ठायांहरिभेमृदुध्रुवलघुष्वोजस्विभिः पाकपः क्ष्माजार्कोदयजन्मपैः स्थिरतनौशीर्षोदयेसद्घते रिक्तांप्रोज्झ्यजनुग्रहा-
दुपचयेलग्नेत्रिषष्ठायगैः पापैरंत्यषडष्टवर्जितशुभैर्भूपाभिषेकःशुभः ३० आदित्येध्रुवभेंऽत्यभेद्विदयितेत्वाष्ट्रद्वयेवारु
णे मैत्राश्वेरविजीवभार्गवदिनेचंद्रेशुभैर्वीक्षिते
रत्नमालायांशनिवारोप्युक्तोस्ति तेनभौमार्कवारौनिषिद्धौ अन्येवाराःशुभाःरि
क्तांप्रोज्झ्यजनुग्रहाज्जन्मलग्नात् वाजन्मराशेरुपचये ३।६।१०।११ लग्नेत्रिषष्ठायगैः पापग्रहैः अंत्यषडष्टवर्जितशुभैः शुभग्रहैः द्वादशषष्ठाष्ट
मरहितैः भूपस्याभिषेकःशुभइतितात्पर्यार्थः इतिराजाभिषेकः ३० आदित्येइति भूपालैः राजभिः इतिएतावन्मात्राःहेतयः आयुधानि एषुयो
गेषुधार्याः किंलक्षणैः भूपालैः जयाभीप्सुभिः जयकांक्षिभिः द्यादित्येपुनर्वसुद्वये ध्रुवेषु अंत्येरेवत्यां द्विदयितेविशाखायां त्वाष्ट्रद्वयेचित्राद्वयेवा

रुणेशत भिषंमैत्राश्वे अनुराधाश्विन्यौ एषुभेषु रविजीवभार्गवदिने वारेषु चंद्रेशुभैर्वीक्षिते चंद्रेशुभेशुभग्रहैर्वा ईक्षिते विधुबलेचंद्रबलेसति कुं
तः भल्लः असिः खड्गः छुरिका धनुः धनुष्यं शरः बाणः तनुत्राणंकवचं इतिहेतयोधार्याः इत्यस्त्रधारणम् ३१ हस्तेति एषुयोगेषु यानंगम
नंसत् हस्तेंदुश्रवणाश्विपुष्यवसुभेषु आदित्यमैत्रांत्यभे आदित्यंपुनर्वसुः मैत्रमनुराधा अंत्यभेरेवत्यां त्रिकुबाणपर्वतमिता स्तारा स्त्यजे-
त् चपरं पूर्वतः प्राचीदिक्तः शाक्रद्वयंज्येष्ठामूले मंदेंदुवारौशनिसोमौप्राच्यांत्यजेत् श्रुतिषट्कंश्रवणादिषट्कम् गुरुवारंयाम्येत्यजेत् अ

कुंतासिच्छुरिकाधनुः शरतनुत्राणानिकंटारिकाभूपालैरितिहेतयोविधुबलेधार्याजयाप्तीच्छुभिः ३१ हस्तेंदुश्रव
णाश्विपुष्यवसुभेष्वादित्यमैत्रांत्यभेसद्यानंत्रिकुबाणपर्वतमितास्ताराश्चशाक्रद्वयम् मंदेंदूश्रुतिषट्कमी-
ज्यममरेज्यर्क्षकभंपूर्वतःशुक्रार्कोज्ञकुजार्यम द्वयमथार्कशार्किरिक्तास्त्यजेत् ३२ मरेज्यर्क्षपुष्यं कभं रोहिणी शुक्रा
र्कौपश्चिमेत्यजेत् ज्ञोबुधः कुजोभौमः अर्यमद्वयम् उत्तराफल्गुनीहस्तौ उदक्त्यजेत् अथअर्कशार्किरिक्ताः रविभौमशनिरिक्तास्तिथयः
त्यजेत् तथाचोक्तम् तिथ्यश्चतुर्थीनवमींचतुर्दशींविहायविष्टिंकरणंचगच्छतः भवंतिचामीकरवाजिवारणारथाश्चमुख्याधनवामिवार १४
णाः १ अन्यत्रनक्षत्रेषु परित्यजेत्त्वाष्ट्यमोरगाणामर्धंद्वितीयंगमनेजयेप्सुः पूर्वार्धमाग्नेयमथाद्दिदैवंस्वातीमतेनोशनसः समस्तं २सौम्यवा
रेषुभयात्रेति इतियात्राप्रकरणम् ३२

अथशकुनान्याह विप्राइति एतेपदार्थागमेदृष्टाःशुभाःस्युः एतेके विप्राःएकाधिकाद्विजाः गावःफलंपुष्पंदुग्धंमणिःस्फटिकादिवज्रांतः
वेश्यासामान्यवनितादधिइभोगजः हयोऽश्वः छत्रमातपत्रं आदर्शोदर्पणम् मधुक्षौद्रंज्वलच्छिखीज्वलमानोवन्हिः स्फरामद्यं मांसंअपक्वा
मिषंअस्त्रंखड्ग भल्लखेटकादि कन्यामृगःएणःबभ्रुर्नकुलःचाषोनीलपक्षी मयूरःशिखंडीपूर्णघटःपुत्रयुक्तास्त्रीस्फवाक्शोभनाशीःप्र
युक्तावाणी वाद्यंचतुर्विधं ततंवीणादिकंप्रोक्तंसन्नद्धंमुरजादिकम् घनंतालादिकंज्ञेयंस्फषिरंवंशपूर्वकम् ४ एतेषांमध्यादेकतमंवाद्यम्

विप्रागोफलपुष्पदुग्धमणयोवेश्यादधीभोहयश्छत्रादर्शमधुज्वलच्छिखिस्फरामांसास्त्रकन्यामृगाः बभ्रुश्चापमयूरपूरि
तघटाःपुत्रान्वितास्त्रीस्फवाग्वाद्यंचामरधौतवस्त्ररजकादृष्टागमेस्युःशुभाः ३३ काष्ठंचर्मतृणाहितूललवणास्थ्यंगा
रतैलंगुडोवंध्यारिःकलिमुक्तकेशवसनोभ्यक्तोषधिःक्लीबविट् चामरंवायुव्यजनं धौतानिवस्त्राणियत्पार्श्वे एवंविधोरजकः

एतेपदार्थाःअन्यच्चस्फवाक्वेदध्वनिरपिग्राह्यःवाद्यध्वनिरपितथा मृदंगादिघोषःश्रेष्ठःदर्शनंनकुलचाषमयूराणामपिश्रेष्ठं छागोभरद्वाजः
पक्षीदृष्टःशुभः ३३ काष्ठमिति एतेपदार्थाःगमेगमनेदृष्टाःनोशुभाः एतेके काष्ठंइंधनादि चर्मउपानदादि तृणंघासादि अहिःसर्पः तूलंकार्पा
सादि लवणंपंचविधं लवणंकाललवणंसैंधवंसौवर्चलं सामुद्रकं यद्यप्योषधमध्येएतेषामंतर्भावःतथापिजवक्षार साजिक्षारावौषधमध्ये

ग्रास्थ्यौ अस्थिदंतादि अंगारः शांताग्निकाष्ठेंगारः तैलं सर्वमपि वंध्यावनिता अप्रसूतास्त्री अभ्यक्तोनरः तैलाभ्यक्तः औषधं चूर्ण गुटिकादि
क्लीबः षंढः विट् पुरीषं तक्रं पंकः कर्दमः वसा पशूनां चर्मांत्रादि आर्द्रवस्त्रं यस्यसः आर्द्रवस्त्रः जटिलोजटावान् श्यामान्नं माषमुद्गतिलादि मुंडः
क्षपणकः क्षुतं छिक्कनित् छिक्का प्रावृट् संन्यासी दीनः रूमत्तः क्षीबः वांतोवमन् विगलन् पतन् दुष्टोक्तयोमायाहि क्वयास्यसीति नोशुभाः इत्यपशकु
नाः ३४ मासइति एतेषुयोगेषु गृहारंभणं वास्तुप्रारंभणं कर्तव्यं क्व फाल्गुनमार्गमाधवनभःपौषे फाल्गुनः प्रसिद्धः मार्गो मार्गशीर्षः माधवो

तक्रंपंकवसार्द्रवस्त्रजटिलश्यामान्नमुंडक्षुतं प्रावृट्दीनरूमत्तवांतविगलन्दुष्टोक्तयोनोशुभाः ३४ मासेफाल्गुनमार्गमाधव
नभःपौषेध्रुवेंद्वीज्यभेहस्तस्वातिवसुद्वये शनिभृगुज्ञेज्ये गृहारंभणं द्वारंप्राकृतिमिमेषकौर्पिषुशुभं याम्यं नृयुग्मांगनानक्रे
पश्चिमसुदक्तौलिकलशेकर्काश्विसिंहेउदक् ३५

वैशाखः नभाः श्रावणः पौषः प्रसिद्धः एतेष्वेवमासेषु गृहारंभः तदुक्तं वास्तुशास्त्रे
चैत्रेशोककरं गृहादिरचनं स्यान्माधवेऽर्थप्रदं ज्येष्ठेमृत्युकरं शुचौपशुहरं तद्वृद्धिदं श्रावणे शून्यं भाद्रपदेऽश्विने कलिकरं भृत्यक्षयं कार्तिके धान्यं मा
र्गसहस्ययोर्दहनभीर्माघेश्रियः फाल्गुने १ ध्रुवेषुरोहिण्युत्तरासु इंदौमृगे ईज्यभेपुष्ये हस्तस्वातिवसुद्वयेधनिष्ठाशतभिषे शनिभृगुज्ञेज्येवारे १५
मंदशुक्रबुधगुरुवारेषु गृहारंभणं कार्यं इति मिमेषकौर्पिषुराशिषु सत्सु मीनमेषवृश्चिकेषु एतेषांराशीनां प्राग्द्वारं गृहं सत् नृयुग्मं मिथुनोंगनाक

न्या नक्रेमकरे एतेषांयाम्य द्वारंगृहंसत् उक्षतौलिकलशे वृषतुलाकुंभेपश्चिमद्वारंसत् कर्केऽश्विधनुषिसिंहेषु उदग्द्वारं गृहं सत् ३५ सिंहादिति द्वहालयेगृहेसत् सिंहात्त्रिषु तिसृषुसंक्रांतिषु हरिदिशः ईशानकोणतः सव्यंसव्येन शेषस्यशेषनागस्याननंपृष्ठंपुच्छंभ्रमेव् अपरंशून्यं तच्छू-न्यदिशिखातंशुभं सिंहकन्यातुलासंक्रांतिषु शेषस्येशानकोणेमुखं आग्नेय्यांपृष्ठं नैर्ऋतौपुच्छं वायव्येशून्यं तत्रखातंकर्तव्यं एवंवृश्चिकादिषु तिसृषुसंक्रांतिषुवन्हिकोणेमुखं नैर्ऋतिकोणेपृष्ठं वायव्येपुच्छं ईशानेखातः एवंकुंभादितिसृषुनैर्ऋतौमुखं वायव्येपृष्ठं ईशानेपुच्छं आग्नेय्यां-

सिंहात्त्रित्रिरिहालयेहरिदिशः कोणेषुसव्यंभ्रमेच्छेषस्याननपृष्ठपुच्छमपरंशून्यंचखातेशुभं मीनादेवगृहेऽपसव्यमृषभाद्दे
घाच्चचापाद्गुः सव्यंपूर्वदिशः क्रमेणतमसिद्वारंनसत्सन्मुखे ३६

खातः एवंदेवगृहेमीनात्त्रयंत्रयंगणनीयं जलाशयेमकरादेवमेवगणनीयं तथाचमुहूर्तचिंतामणौ देवालयेगेहविधौजलाशये शेषाननंशंभुदिशः क्रमेण मीनार्कसिंहार्कमृगार्कतस्त्रिभेखातेमुखात्पृष्ठविदिक्शुभाभवेत् १ दैवज्ञवल्लभेपि ऐंद्र्यांशिरो भाद्रपदात्त्रयेच याम्येतुमार्गात्त्रितयेहिवक्त्रं तपस्यमासात्त्रिषुपश्चिमायां ज्येष्ठादिमासात्त्रितयेप्युदक्स्यात् इतियत्कन्यादिगणनाकृतातद्वास्तुशास्त्रोक्ता प्राच्यांनागमुखंबुधैर्निगदितंभाद्राश्विनेकार्तिकेमार्गात्फाल्गुनशुक्रतस्त्रिषुमुखंयाम्येजलेचोत्तरे क्षेत्रेऽष्टाष्टविभाजितेदिनकराद्द्वाराल्लिखेत्कोष्टका शय्यंगारकयोश्चतत्रफणिनः शारीरितंनोखनेत् इतिराजवल्लभोक्तं

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| र | चं | मं | बु | बृ | शु | श | र |
| चं | मं | बु | बृ | शु | श | र | चं |
| मं | बु | बृ | शु | श | र | चं | मं |
| बु | बृ | शु | श | र | चं | मं | बु |
| बृ | शु | श | र | चं | मं | बु | गु |
| शु | श | र | चं | मं | बु | बृ | शु |
| श | र | चं | मं | बु | बृ | शु | श |
| र | चं | मं | बु | गु | शु | श | र |

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ईशाने ५।६।७ | | अग्नी ८।९।१० | ईशान. २।३।४ | | अग्नी ११।१२।१ | ईशाने १२।१।२ | | अग्नी. ३।४।५ | ईशान १०।११।१२ | | अग्नी. १।२।३ | | पूर्व. ९।१०।११ | |
| | गृह्ह. खात. | | | वेद्यां तखात | | | देवा लय | | | जला लय | | उत्तर. ६।७।८ | राहु दिश | दक्षि १२।१।२ |
| वायव्य २।३।४ | | नैर्ऋत ११।१२।१ | वायव्य ५।६।७ | | नैर्ऋत ८।९।१० | वाय० ९।१०।११ | ९।१०।११ | नैर्ऋत ६।७।८ | वाय० ७।८।९ | | नैर्ऋ. ४।५।६ | | पश्चिम ३।४।५ | |
| देवा | लयगृ | ह्विधौ | जला | शयेवे | दिका | यांशे | षस्या | ननंशो | मूर्द्धि | खातः | क्रमेण | | | |

पूर्वास्येनिखररवातकंयमदिशास्येरवातमीशानकेआग्नेय्यांरवननंचपश्चिमदिशावक्त्रेतथैवोत्तरे वक्त्रेनैर्ऋतिकोणकेचरवननंवाशंकुसंस्थापनमि
त्युक्तिवशात् पर त्वभाद्रपदःश्रावणःपूर्णिमातस्तदातुसिंहसंक्रांतिसंभवात् रामदैवज्ञादिभिर्मुहूर्त्तचिंतामणौसिंहादितोगणनाकृताः अथ-
वृषभात्वृषभ राशितो ऽपसंव्यंवामक्रमेणगणनावेद्यांविवाहवेद्यांमंडपवेद्यांवाश्रौताधानवेद्यांरवननमुक्तम् अन्यच्च वृषाद्वेद्यांगृहेसिंहात्रिकंभी
नात्कूरालये सृष्ट्यासंचरतेनागोवेदीरुद्रालयंविना १ अत्ररवातेबहवोभ्रमंतिवलमंचकुर्वंतिराज्ञ वह्नभोक्तं चतुःषष्टिकोष्ठगतंभौमशनि

यास्योदक्प्रथमालितौलिवृषभेद्वारंसतीनेशुभंप्राक्पश्चाद्घटसिंहकर्किमकरेथोवास्तुकुंभेर्कभात्

गतफणिनःशरीरेनोरवनेत् अत्रसिंहादित्रये पूर्वमुरवेनागेवायव्येशून्यमायाति उत्तराभिमुरवेनैर्ऋतिकोणेशून्यमायातिइत्यलं चापध-
न्वर्कान्त्रयेप्यगुःराहुः पूर्वदिशःसकाशात्क्रमेणभ्रमति तमसिराहौसन्मुरवंद्वारंनसत् इतिगृहारंभः ३६ यास्योदगिति प्रथमालितौलि
वृषभे प्रथमोमेषः अलिर्वृश्चिकः तौलिःतुला वृषभश्च एषांसमाहारः तत्रराशिषुइनेसूर्येगतेसतियाम्योदक्द्वारंशुभं घटसिंहकर्किमकरेइनेग
तेसतिप्राक्पश्चाद्द्वारं गृहंशुभम् एतेनवत्सःकथितः वत्सःपूर्वादिषुदिक्षुकन्यादितस्त्रयेत्रयेवत्सोवसतिगृहेषुसन्मुरवएषतोनसत् उक्तंच
अग्रतोहरतेआयुः पृष्ठतोहरतेधनम् वामदक्षिणयोर्वत्सेगृहद्वारंस्तुशोभनम् १ अथोवास्तुकुंभेवास्तुकलशेअर्कभात् षष्ठात्धिष्ण्यात् अ

ष्टस्कभेषु गृहप्रवेश : अथो अथवा द्वाविंशतितः नक्षत्रात्सट्स्कप्रवेशः शुभः सत् खेटे शुभग्रहे दशमस्थिते स्थिरराशिलग्ने द्यंगोदये द्विस्वभावलग्ने स
कृते शुभग्रहयुते लग्ने सति गृहारंभः कार्यः ३७ द्वाम्ब्वक्रमिति रविभाद्वाम्ब्वक्रं शीर्षभुजोर्ध्वमस्तक स्वशास्वोर्ध्वकोण शास्वाकोणगणनान् यु
गद्विजलधिव्द्याब्धिद्विवेदद्वयं शेषं लिखेत् तत्र मध्योर्ध्वपार्श्वद्वये सत् कोणेषु अधरगतकोणेषु चेद्द्वं द्वारस्थापनसमये समायाति तदोर्ध्वसंभवे
त् अधोदेहल्यां धनहानिः स्यात् अथ चरभांशार्कारिक्ताः कुहूममावास्यां त्यक्त्वा वामेऽर्के सति अत्र गृहे वासः कर्तव्यः क मृदुध्रुवेज्यहरिभ

षष्ठादष्टस्कभेषु सद्गृहमथो द्वाविंशते : षट्स्कभाः सत्खेटे दशमस्थिते स्थिरगृहे द्व्यंगोदये सत्कृते ३७ द्वाम्ब्वक्रं रविभाद्युग ४ द्वि
२ जलधि ४ द्व्य २ ब्धि ४ द्वि २ वेद ४ द्वयं २ शेषं शीर्षभुजोर्ध्वकोणगणनान्मध्योर्ध्वपार्श्वद्वयं सत्कोणाधरगेन चाथ चरभांशा-
र्कारिक्ताकुहूं वामेऽर्केऽथ मृदुध्रुवेज्यहरिभे द्वंद्वे च वासोऽनिले ३८
द्वंद्वेऽनिले मृदूनि चित्रारेवत्यनुराधाः ध्रुवाणि रोहिण्युत्तराणि ईज्यं
पुष्यं हरिभद्वंद्वं श्रवणधनिष्ठे अनिले स्वातौ वामार्कस्त्क बहुधा प्रोक्तः एकप्रकारस्त्क कार्शानवात्सप्तसप्तनक्षत्राणि चतुर्दिक्षु लिखेत् तत्र धिष्ण्ये रवि-
र्भवेत् द्वितीयप्रकारस्त्क दग्धादिशुक्तारविणा प्रभुक्ता यस्यां रविर्यास्यति धूमिता सा दीप्तार्कयुक्ता रजनी भवांत्य यामार्धतो यामभिता गतिः स्यात् १७
१ तृतीयप्रकारस्त्क लग्नकुंडलिकायां लग्नद्वितीयद्वादशेषु यो ग्रहः स पूर्वगः एकादशदशमनवमेषु दक्षिणगः अष्टमसप्तमषष्ठेषु पश्चिमगः पंचमत्तुर्थ
तृतीयेषूत्तरगः एवं क्रमेण रविमानयंति इति गृहप्रवेशः ३८

द्वीशोऽइति द्वीशेमूललघुध्रुवेमृदुचरेपैत्र्येहलारंभणं केते द्वीशीविशाखायां मूलंप्रसिद्धं हस्तपुष्याश्व्यभिजित् ध्रुवाणिरोहिण्युत्तरात्रया
णि मृदूनिचित्रारेवत्यनुराधाः चरभानिस्वातीपुनर्वसू श्रवणधनिष्ठाः पैत्र्यंमघा एतेषुऋक्षेषु हलारंभणंहलप्रवहणंकार्यं मंदकुजौवारौ
द्वादशीसहितांरिक्तां पर्वणीपूर्णिमावास्यौ अष्टमींचत्यक्त्वा अथतच्चक्रेहलचक्रेरवेः सूर्यस्यभुक्तभात् गणनाकार्या त्रित्रीणि इषवः पंच त्रि
त्रीणि बाणाः पंच त्रयंत्रीणि त्रीषु त्रीणिपंच ऋक्षेषुनक्षत्रेषु फलंशुभमशुभंज्ञेयम् इहगमने आशाशूलपूर्वंदिक्शूलंवारशूलंत्यजेत् इतिह

द्वीशेमूलेलघुध्रुवेमृदुचरेमैत्र्येहलारंभणंत्यक्त्वामंदकुजौहरिदृक्सहितांरिक्तांचपर्वाष्टमीं तच्चक्रेरविभुक्तभाद्गणनयात्री
३षु५त्रि ३बाण ५त्रयं ३त्री ३षू ५क्षेष्वशुभंशुभंफलमिहाशाशूलपूर्वंत्यजेत् ३९ मैत्रांत्यवसूभेकरत्रयमघामूलाश्विचां
द्रेध्रुवेपुष्येसत्त्वलुबीजवापनमहेश्वक्रेरवेर्भुक्तभात् त्रिस्त्रिर्मूर्ध्निगलेनशोभनफलेतुंदेर्कताराः शुभाः पुच्छेन्यत्रचतुष्कपंच
कइमेबीजोप्तिकालेखले ४०

लारंभः ३९ मैत्रेति एषुयोगेषुबीजवापनंसत् केषु मैत्रेअनुराधायां अंत्येरेवत्यां वसुभे धनिष्ठायां करत्र
येहस्तचित्रास्वातौ मघायां मूलेअश्विन्यां चांद्रेमृगे ध्रुवेरोहिण्युत्तरासु पुष्ये अहेश्वक्रेसर्पाकारचक्रे रवेर्भुक्तभात् त्रिस्त्रिमूर्ध्निगले त्रीणिमूर्ध्नि
त्रीणिगलेशोभनफलेन तुंदेजठरे अर्कताराद्वादशधिष्ण्यानिशुभाः पुच्छेऽन्यत्रचतुष्कपंचकेपुच्छे चतुष्कं अन्यत्र बहिः पंचकं इमेबीजोप्ति

कालेखलेदुष्टफलेभवन्तः इतिबीजोक्तिः ४० पौष्णोइति एषुयोगेषुऔषधंसत् एषुकेषु पौष्णे रेवत्यां अश्वेअश्विन्यां अदितिभद्वये पुनर्वसूपु-
ष्ये शशिभेमृगे हस्तात्रयेहस्तचित्रास्वातौ कर्णात्रयेश्रवणधनिष्ठाशतभिषक् मैत्रे अनुराधायां कोणपभेमूले किंकृत्वा रिक्तार्कजान्त्यक्त्वा औ
षधंसद्भवतिइतिशेषः नस्यरोगिणःस्नानंचरभांगयोः चरभेषुस्वात्यादित्यहरित्रये चरलग्नेमेषकर्कतुलामकरेषु इनकुजे सूर्यभौमवारे रिक्ता
सुतिथिषु कृष्णादलेकृष्णपक्षे अत्रापिशुभचंद्रे रत्नमालायांयदुक्तम् रिक्तातिथौचंद्रबलेविहीनेइत्यत्रचंद्रबलेस्वकीयेनैसर्गिकबलेक्षीणचंद्रइ

पौष्णेश्वेदितिभद्वयेचशशिभेहस्तात्रकर्णात्रयेमैत्रेकोणपभेसदौषधमथत्यक्त्वाचरिक्तार्कजान् तत्स्नानंचरभांगयोरि
नकुजेरिक्तासुकृष्णोदलेसुकेंदुध्रुवसार्पपौष्णपितृभादित्यानिलर्क्षंत्यजेत् ४१

स्पर्थः तत्रशुक्रवारंचंद्रवारं ध्रुवभानि सार्पमा-
श्लेषां पौष्णंरेवतींपितृभंमघां आदित्यंपुनर्वसूं अनिलर्क्षंस्वातींत्यजेत् इत्यौषधरोगीस्नानं ४१ घोरेति क्रूरेषुरविवारे यासंक्रांतिः साघोराभ
वति लघुडुषुशशिवारे ध्वांक्षीभवति क्षोणिजेभौमवारेचरभेषुयासंक्रांतिः सामहोदरीभवति मृदुभेषुज्ञदिवसेयासंक्रांतिःसामंदाकिनीभवति इ
ज्येगुरुध्रुवभेषुयासंक्रांतिःसामंदा भवति मिश्रभेसिते यासंक्रांतिः सामिश्राभवति तीक्ष्णभेषुशनिवारेयासंक्रांतिःसाराक्षसीनाम्नीभव १८
ति एवमत्रयुगपद्वारभयोगेसंपूर्णनामद्वयोः अन्यथात्वेकवारवशाद्भिन्नंनामतदानामद्वयंभवति क्रमेणसप्तापिसंक्रांतयः शूद्रवैश्यचोरक्षत्रिय

द्विजपशूम्लेच्छानां साशुभा भवति घोराशूद्रान् सुखयति ध्वांक्षीवैश्यान् सुखयति महोदरीचौरान् सुखयति मंदाकिनीनृपान् सुख यति मंदाद्विजा
न् सुखयति मिश्रा पशून् सुखयति राक्षसी अंत्यजान् सुखयति ४२ ध्रुवंगर्क्षे इति ध्रुवंगर्क्षे द्विस्वभावराशौ या संक्रांतिः तस्याः षडशीति वक्त्रं द्विस्वभा
वराशयो मिथुनकन्याधनुर्मीनाः एताः षडशीति मुखाभिधाः मृगे मकरे या संक्रांतिः तत्सौम्यायनं भवति अत्र पंचसंक्रांतिषु उत्तराः संक्रांतिका

घोरा क्रूरखौ लघुडु शशिनि ध्वांक्षी महोदर्यथो क्षोणीजे चरभे मृदुज्ञादिवसे मंदाकिनी ज्येध्रुवे मंदा मिश्रसिते च मिश्रकथनाती
क्ष्णार्कजे राक्षसी श्रेष्ठा शूद्रकवैश्यचौरनृपविट् पश्वंत्यजानां क्रमात् ४२ ध्रुवंगर्क्षे षडशीति वक्त्रमयनं सौम्यं मृगे चोत्तरा नाड्यः षो
डश पुण्यदाश्च विषुवन्मेषे तथा तौलिनि मध्याः पुण्यतमाः स्थिरे हरिपदं याम्यायनं कर्कटे पूर्वाः पुण्यतमाश्च तत्र तिलमुग्धान्यं
घृतं चापर्यंत ४३

त्तराः षोडशनाड्यो घटिकाः पुण्यदाः इदं साधारणेन कथितम् पूर्वतोपि परतोपि संक्रमात् पुण्यकाल घटिकास्तु षोडशे
ति वचनात् अन्यथा अनयोर्विशेष उक्तः ब्रह्मवैवर्तादौ अतीतानागते पुण्ये द्वे उदग्दक्षिणायने त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिका इति मक
रे चत्वारिंशत् घटिका उत्तराः मेषे तथा तौलिनि तुलायां संक्रांतिषु वि षुवसां तत्र मध्याः पुण्यतमाः विशेषवचनात् दशप्रोक्ता वर्तते वर्तमाने तु
ला मेषे नाड्यस्तूभयतो दशेति वचनात् स्थिरे स्थिरराशौ वृषसिंहवृश्चिककुंभसंक्रांतिषु हरिपदं भवति कर्कटे याम्यायनं भवति तत्र पूर्वा संक्रांतितः

मार्कत्रिंशन्नाड्यः पुण्यदाः तत्र संक्रमकालेतिलान्युधान्यं रूर्वं अपयेत् तथान्चोक्तं संक्रांतौ यानिदानानि हव्यकव्यानि भारत तानि तान्युपतिष्ठंति पि-
तृणामक्षयायचेति व्यासः १ इतिसंक्रांतिः ४२ द्व्यादित्येति एवुयोगेषु करिणांहस्तिनांकर्म आरोहणान्सपनशिक्षादिकर्मकर्तव्यं केषु आदित्या
हि द्व्यादित्यं पुनर्वसुपुष्ये तत्र अश्विकरत्रयं अश्विन्यांहस्तत्रये हस्तचित्रास्वातौ करिणांहस्तिनांकर्मकुर्यात् अथपौष्णद्वये रेवत्यश्विन्योः स्वा
तौ ईज्येपुष्ये अदितिभेपुनर्वसौ करे हस्ते मृगेमृगशीर्षे वसुद्वंद्वे धनिष्ठाशतर्क्षयोः वाजिनांकर्मकुर्यात् आनयनारोहणादिशिक्षाकर्मकुर्यात् शक्रेज्येष्ठायां

द्व्यादित्येश्विकरत्रयेचकरिणांकर्माथपौष्णाद्वयेस्वातीज्यादितिभेकरेमृगवसुद्वंद्वेतथावाजिनाम् शाक्रे‍ऽर्केवसुभद्वयेदितिसु-
रगेद्वीशाश्विपौष्णेगवांनोकर्णध्रुवपर्वपक्षकदलेत्वाष्ट्रेचरिक्तार्कयोः ४४ चक्रेश्वेशिरसित्रयंस्कुरवकरं वक्त्रेत्रयेमानदं द्वेस्के
पंचत्त्वदिस्थभानिचरणेष्वष्ट तुदुष्टानिच
अर्केहस्तेवसुभद्वये धनिष्ठाशतभिषक्पूदितियुगेपुनर्वसुपुष्ये द्वीशेविशाखायां अश्विन्यां
पौष्णोरेवत्यां गवांगोवृषाणां आनयनादिक्रयविक्रयइत्यादिगोदमनादिकर्मकुर्यात् कर्णेश्रवणे ध्रुवेषुरोहिण्युत्तरासु पर्वणोः दर्शपौर्णमास्योः
पक्षकदले अष्टम्यां त्वाष्ट्रेचित्रायां रिक्तातिथौ अर्कवारे पशूनां पूर्वोक्तकरितुरंगगवांकिमपिकार्यंनकार्यम् तथान्चोक्तं चित्रोत्तरावैष्णवरोहि १९
णीषुचतुर्दशीदर्शदिनाष्टमीषु स्थानप्रवेशंगमनंविदध्यान्नहीमान्पशूनांनकदाचिदेव ४४ चक्रेइति अश्वेचक्रे अश्वाकारचक्रेसूर्यर्क्षाद्भत्रयंशि

रमिदेयं अत्रमुहूर्त्तेसुखकरं ततस्त्रयंवक्रेसुखेमानदंभवति ततःस्त्वदिपंचभानिहृद्येवाहनहत्यैभवंति चतुश्चरणेयुततोष्टभानिदुष्टानि
भवंति पुच्छेचतुष्टयंस्वक्षयकृद्धननाशाद्भवति पृष्ठेचतुष्कंमृतिनिमित्तंभवति इतिसूर्यभाद्दिनभावधेः फलंकेचनवदंति केचनवाहर्क्षतः अ
श्वस्यनामनक्षत्राद्दिनभावधेःफलंवदंति तत्तुनरपतिजयचर्चायां युद्धसमयेशनिस्थितिविलोकनार्थेतुरंगभाद्दिखंति अत्रतुसूर्यभादेवगण
नाकार्या इतिकरिवाजिगोकर्म ४५ सौम्येइति एषुयोगेषुउष्ट्रकर्मसव एषुकेषु सौम्येमृगेपौष्णायुगेरेवत्याश्विन्योःकरेहस्ते अदितियुगेपुन

पुच्छेस्वक्षयकृच्चतुष्टयमथोपृष्ठेचतुष्कंमृतौसूर्यर्क्षाद्दिनभावधेः फलमिदंवाहर्क्षतःकेचन ४५ सौम्येपौष्णायुगेकरेदितियुगे
द्वीशेधनिष्ठाद्वयेपूर्वास्विंद्रयुगेसदुष्ट्रमहिषीकर्माथमंथानकं मूलेपौष्णकरत्रयेध्रुवमृगेमैत्रेश्विभेवासवेतोयार्चाशशिजी
वभार्गवदिनेमूलेकरेवैष्णवे ४६ वैस्रद्वये द्वीशेविशाखायां धनिष्ठाद्वयेशतभिषक् पुनर्वसूनिस्सृषु इंद्रयुगेज्येष्ठामूलयोःउष्ट्रस्यद
तिबंधनक्रयविक्रयादिकार्यम् महिषीआनेयादौत्या अथमंथानकंदधिमंथनमुहूर्तः मूलेपौष्णेरेवत्यां करत्रयेहस्तचित्रास्वातौ ध्रुवाणिरोहि
ण्युत्तराणि मृगेमैत्रे अनुराधायां अश्विभेवासवे धनिष्ठायांदधिमंथनस्यनवीनारंभःकार्यः अथतोयार्चाप्रसूताभिःस्त्रीभिःजलमातॄणांपूजा
कार्या सातोयार्चा चंद्रगुरुभार्गववारेषु मूलभेहस्तेवैष्णवेश्रवणे अन्यत्रकुलाचारादपिपूजा इत्युष्ट्रमहिषीमंथानतोयार्चाः ४६ ५ ५

मासेइति एषुयोगेषुकूपविधिश्रेष्ठः एषुकेषु फाल्गुनपौष माधवनभोमार्गेमासे माधवोवैशाखः नभाः श्रावणः मार्गः मार्गशीर्षः तत्र अष्टमीद्वा
दर्शीरिक्तांप्रोझ्झ्यत्यक्त्वा शशीः चंद्रः ज्ञोबुधः जीवोगुरुः एषांदिवसेवारेहस्तभेपैत्र्येमघायांध्रुवेरोहिण्युत्तरात्रयेषु पुष्येमैत्रे अनुराधायांवसुद्वये
धनिष्ठाशतभिषक्द्वये शनिबुधेज्यर्क्षे शनिबुधगुरूणां ऋक्षेराशौतनौलग्ने कर्किणि लग्नेसौम्यखचरैः सौम्यग्रहैः केंद्र १।४।७।१० त्रिकोणे ५।९

मासेफाल्गुनेपौषमाधवनभोमार्गेऽष्टमींद्वादशींरिक्तांप्रोझ्झ्यशशिज्ञजीवदिवसेहस्तेथमैत्रेध्रुवे पुष्येमैत्रवसुद्वयेशनिबुधेज्य
र्क्षेतनौकर्किणिश्रेष्ठः कूपविधिश्चसौम्यखचरैः केंद्रत्रिकोणस्थितैः ४७ ग्रामाद्वायुहुताशराक्षसदिशंत्यक्त्वांबुकूपंखने-
त्तच्चक्रेऽर्कभतस्त्रिकंक्रमगतंमध्येंद्रदिक्तोलिखेत् चंद्रर्क्षावधिमध्यसौम्यवरुणाग्नेयाः शुभाः पादपारोपेपुष्यमृदुध्रुवाश्विशत
भंद्वीशंसमूलंकरः ४८ स्थितैः कूपखननारंभः कार्यः ४७ ग्रामादिति ग्रामात् वायुकोणाग्निकोणराक्षसकोणान् त्यक्त्वा राक्षसंनैर्ऋतिकोणं अंबु
कूपंजलक्षरणार्थंकूपंखनेत् तच्चक्रेकूपचक्रेऽर्कभतः सूर्यभात् त्रिकंत्रिकंमध्येंद्रदिक्तोपिक्रमगतंलिखेत् तत्रमुहूर्तनक्षत्रावधिगणनाकार्या मध्य-
सौम्यवारुणाः ज्ञेयाः शुभाः मुहूर्तनक्षत्रंमध्येआयातितच्छुभम् वासौम्यदिशिउदक्श्रेष्ठं वरुणादिक्पश्चिमायांश्रेष्ठं आग्नेयकोणेपिश्रेष्ठं अ
थपादपारोपे वृक्षारोपणेपुष्यः श्रेष्ठः मृदूनिचित्रारेवतीअनुराधामृगः श्रेष्ठानि ध्रुवभानिरोहिण्युत्तराणि अश्विनीशतभंशतताराः द्वीशंविशाखा २०

मूलेनसहक रः हस्तः एषुवृक्षाः रोपणीयाः बीज वापो वृक्षस्यकार्यः इतिकृषद्रुमाः ४८ मैत्रेइति एषुयोगेषुचहरेः स्थापनंस्याद् क मैत्रे ऽनुराधा
यांपौष्णेरेवत्यां लघुषु भेषु हस्तईज्यः पुष्यः अश्विनी अभिजित्क ध्रुवेषुरोहिण्युत्तरासु अदितिभेपुनर्वसौ मृगेमृगशीर्षे कर्णद्वये श्रवणधनिष्ठयोः
एषुहरेः शनिष्ठा वाग्देव्याः सरस्वत्याः वाग्देव्याभगवत्याः गणनायकस्यगणेशस्यफणिनांक्षेत्रपाला दीनां कर्णद्वये श्रवणेधनिष्ठायां पूषभेरेवत्यां
ग्रहगणस्यरव्यादीनांशनिपर्यंतानांप्रतिमादिस्थापनं ईज्येपुष्येध्रुवेरोहिण्युत्तरात्रये चतुर्षुध्रुवभेषु तत्रप्रतिष्ठायांग्रहयोगानाह नव ९ धी ५ केंद्र १

मैत्रेपौष्णलघुध्रुवादितिमृगेकर्णद्वयेस्यान्हरेर्वाग्देव्यागणनायकस्यफणिनांकर्णद्वयेपुष्यभे रिक्ताविष्टिकुजान्विहायनव
धीकेंद्रायसंस्थैःशुभैः पापैः षड्त्रिभवस्थितैर्ग्रहगणस्येज्येध्रुवेस्थापनम् ४९ पौष्णेपुष्यवसुद्वयेचरविभेमैत्रोन्तराख्येंद्र
भेसन्नृत्यंनृपतीक्षणंलघुमृदुस्थीशद्वयेसत्ध्रुवे

४।७।११ आय ११ संस्थैः शुभैः पापैः षड्त्रि ६।३। भव ११ स्थितैः किंकृत्वा प्रतिष्ठापनं-
कुर्यात् रिक्ताविष्टिकुजान्विहाय रिक्ता ४।९। १४ विष्टिर्भद्रा कुजमंगलवारंविहायप्रतिमानांप्रतिष्ठापनंकार्यम् इतिदेवप्रतिष्ठा ४९ पौष्णेइ
ति एषुभेषुनृत्यासंभणंसत् क पौष्णे रेवत्यां पुष्ये वसुद्वये धनिष्ठाशतभिषक् रविभेहस्तभे मैत्रे ऽनुराधायांउत्तराखतिसृष्वपि इंद्रभेज्येष्ठायांनृत्यंनृ
त्यारंभः सत् नटीनांवानयनांनृत्यशाला यांनृत्यारंभ गोमुहूर्तावलोकनम् लघुभेषु हस्तपुष्याश्विन्यभिजित् मृदूनि मृगशीर्षचित्रारेवत्यनुराधाः

श्रीग्राह्ये श्रवण धनिष्ठायां सध्रुवे रोहिण्युत्तरात्रयं ध्रुवभ सहितेन प्रतीक्षणं नृपावलोकनं सत् स्थिरतनौ शनेर्वारे ध्रुवकेषु सेवकरक्षणे शस्तं पूर्वाफतिसृ
षु आर्द्रायां अहिः सर्पः मघायां इंद्रे ज्येष्ठायां मूले शतर्क्षे शततारकायां याम्ये भरण्यां आसवः ऋभः आसवशब्देन द्राक्षासवो लवंगासवो मधुकासवो
पिप्राद्यः राज्ञासुपयोगि स्यात् तत्संधाने मुहूर्तावलोकनं रत्नमालायामपि मद्यारंभधिष्ण्यान्यादावुक्तानि तथाच रौद्रे पित्र्ये वारुणे पौरुहूते याम्ये
सार्पे नैर्ऋते त्वैवधिष्ण्ये पूर्वाख्यासु त्रिष्वपि श्रेष्ठ उक्तो मद्यारंभः कालविद्भिः पुराणैः १ इति नृत्यनृपेक्षासेवामद्यारंभः ५० पौष्णाश्वेति एषु योगेषु

शस्तं सेवकरक्षणं स्थिरतनौ वारे शनेर्भैः ध्रुवे पूर्वार्द्राहिमघेंद्रमूलशतभे याम्ये शुभम्वासवः ५० पौष्णाश्वानिलहस्तमैत्रवसुभे
ष्वारार्किजीवेभृगौ पुंश्चल्याः पुनरुद्वाहो विधुबले रिक्ता कुयोगोज्झिते तच्चक्रे रविभात्त्रिकं त्रिकमगतेमध्येंद्रदिक्तो लिखेदाग्नेयीन-
र्ऋभानिलान्तविषयं ज्ञात्युक्तधर्मं श्रयेत् ५१ पुंश्चल्याः पुरुषांतरवांछिन्याः पुनरुद्वाहो विधवायाः परनरेण संबंधोयं एषु केषु पौष्णे रेव-
त्यां अश्विन्यां अनिले स्वातौ हस्ते मैत्रे ऽनुराधायां वसुभे धनिष्ठायां आरे भौमवारे अर्के रविवारे जीवे गुरुवारे भृगौ शुक्रवारे तत्र विधुबले द्वयोश्चंद्रे शुभे
सति रिक्ताकुयोगो व्यतीपातवैधृतिमृत्युकाणयमघंटाद्यैः उज्झिते रहिते तच्चक्रे पद्मचक्रे अर्कभात् त्रिकं त्रिकं मध्येंद्रदिक्तः क्रमेण लिखेत् तत्र मुहूर्त- २१
नक्षत्रं आग्नेय्यां सुभं अनिले वायुकोणे पि शुभं अन्येषु दिग्विभागेषु मुहूर्तभं श्रेष्ठं ज्ञेयम् विषयोदेशः ज्ञातिः स्वकीयो वर्णः क्रमेण ज्ञातिस्तत्र योक्तो

धर्मः तंश्रयेत् तथाचोक्तं नशास्त्रदृष्ट्याविदुषाकदाचिन्नोल्लंघनीयाः कुलदेशधर्माः मूलंहितेषांच्युतवेदशाखामहानधर्मः स्थितिभंगदोषात् १ इति-
सत्कुलेविधवायाः पुनरुद्वहउचितस्तत्रैवदेशेधर्मेतैरेवपूर्वोक्तयोगैः कार्यः इतिवृषलीमुहूर्त्तः ५१ लाभेइति अखिलाग्रहाः नवापिग्रहाः लाभेएकाद
शस्थानेलाभकृतोभवंति पंगुः शनिः कुजः भौमः षडभुजे षष्ठेतृतीयेशुभः अर्कः सूर्यः सखेषडभुजेदशमसहितेषडभुजेसूर्यः ३।६। १० श्रेष्ठः शशी-
त्र्याद्यास्त्वारिखगः चंद्रः तृतीयः आद्यः प्रथमः अस्तः सप्तमः अरिः षष्ठः खगः दशमः श्रेष्ठः ३।१।७।६।१० विद्बुधः व्ययाख्यंद्वादशगेहंत्यक्त्वा समे २-

लाभेलाभकृतोऽखिलाः षडभुजेपंगुः कुजोऽर्कः सखेत्र्याद्यास्त्वारिखगः शशीव्ययगृहंत्यक्त्वासमेविद्गुरुः

४।६।८

१० भृगुः षट्खास्तान्त्यंत्यक्त्वातथा षष्ठदशमसप्तमगः शुक्रोनेष्टः अन्येषुसर्वभावेषुश्रेष्ठः १।२। ३।४।५।८।९।११। १२ ईज्यः गुरुः अस्तधर्मध
नधीषु ७।९।२।५।११ श्रेष्ठः जन्मभात् इदंगोचरफलंजन्मराशेर्गणयित्वाज्ञेयम् उद्वाहेविवाहे ईज्यः गुरुः क्रूरसत्रिदिक्ष १।६।३।१० म
हितः पूजितः सन्शुभोभवति पूजांकृत्वालग्नंकार्यं तदुक्तं षष्ठेजन्मनिदेवेज्ये तृतीयेदशमेपिवा भूरि पूजाप्रकर्तव्या कन्यायाः कथितंशुभम् १
अयंगोचरग्रहस्तत्फलंयत्कथितंशुभंसतदाफलंददाति यदापरैर्नो वेधितः अत्रगोचरेग्रहवेधोप्युक्तोऽस्तितथाचरत्नमालायामुक्तम् ला

भ ११ विक्रम ३ ख १० रात्रुषु ६ स्थितः शोभनो निगदितो दिवाकरः रविचरे क्षत ५ तपो ९ जलां ४ त्य १२ गैर्व्योमकैर्मिर्यदि न विध्यते तदा १ अत्र श-
निर्न विध्यति द्यून ७ जन्म १ रिपु ६ लाभ ११ ख १० त्रिग ३ श्चंद्रमाः शुभफलप्रदस्तदा स्वा २ त्मजा ५ त्य १२ मृति ८ बंधु ४ धर्म ९ गैर्विध्यते न विबुधैर्यदि
ग्रहैः २ अत्र चंद्रस्य बुधवेधो नास्ति विक्रमा ३ य ११ रिपुगः ६ शुभः कुजः स्यात्तदांत्य १२ क्षत ९ धर्म गैः ९ खगैः चेन्न विद्ध इन सूनुरप्यसौ किंतु घर्मघृणिना
न विध्यते ३ शनिस्तु सूर्येण न विध्यते स्वां २ बु ४ शत्रु ६ मृति ८ खा १० यगः ११ शुभो ज्ञस्तदा न खलु विध्यते यदा आत्मज ५ त्रि ३ तप ९ आद्य १ नैधन ८
त्य १२ गैर्विधुभिर्नभश्चरैः ४ बुधस्य चंद्रवेधो न स्वा २ य ११ धर्म ९ तनया ५ गना ७ स्थितो नाकनायकपुरोहितः शुभः रिष्फ १२ रंध्र ८ ख १० जल ४

षट् खास्तान्यमथास्त धर्म धन धीष्वीज्यः शुभो जन्मपादुद्वाहे कुरसत्रिदिक्षु महितश्चेन्नोपरैर्वेधितः ५२

त्रि ३ गैर्यदा विध्यते गगनगामिभिर्नहि ५ आस्फुजिल्ला ष्टम ८ तपो ९ व्यया १२ य ११ गो विद्ध आस्फुजिदशोभनः स्मृतः ५ नैधना ८ स्त ७ तनु १ क
र्म १० धर्म ९ धी लाभ ११ वैरि ६ सहज ३ स्थखेचरैः ६ शुक्र एवंविधो विचार्यः यदा वेधकस्थाने ग्रहो भवति ग्रहस्थाने वेधको भवति तदा वाम-
वेधो भवति तदा शुभफलं ग्रहाः प्रयच्छंति तथा चोक्तं एवमत्र खचरा व्यधान्विताः सत्फलं नहि दिशंति गोचरे वामवेधविधिना त्वशोभना अप्यमी शुभ
फलं दिशंत्यलम् १ अत्र प्रायस्त न्मुखो वेधो भवतीति प्रायेण सर्वत्रेति उक्तं च स्वराशेर्यत्र खेटः स्यात्वेधयत्र ग्रहो भवेत् तत्र वेधो क्षमो ज्ञेयो यथोक्तफल
दो भवं इति गोचरफलं ५२ २२

पूर्वास्विति एषुयोगेषुनौयानंनौकाप्रयाणंश्रेष्ठम् क पूर्वास्ऋतिस्रषु श्रवणद्वयेमृदुषुलघुषु अदितिः पुनर्वसुः इष्टतिथौरिक्तातिथिरहिततिथौ
शुक्रार्केज्यदिनेशुक्ररविगुरुदिनेषु तत्रलग्नेउपचयेषु त्र्यारिखायेषु खलैरशुभग्रहैःइष्टैःशुभग्रहैः अषष्ठाष्टगैः षष्ठाष्टमरहितैः सद्भिःसद्भिःनौ
काचालनीया अथेत्यनंतरं उत्तरायममधार्केज्यश्रुतौतस्याः भृतिःनौकामध्येवस्तुप्रक्षेपःकार्यः तत्तटेगत्वा अर्कारार्किरिक्तोज्झितेसमयेरवि
भौमशनिवाररिक्तातिथिरहितेसमयेमृदुभेचरर्क्षेलघुभेव्यापारःकार्यः साधारणोग्रध्रुवदारुणाख्येधिष्ण्येयदत्रद्रविणंप्रयुक्तं नलभ्यतेतन्नि

पूर्वास्त्रश्रवणद्वयेमृदुलघुष्वादित्यइष्टेतिथौशुक्रार्केज्यादिनेखलैरुपचयेष्विष्टैरषष्ठाष्टगैः नौयानंसदथोत्तरायमम
धार्केज्यश्रुतौतद्भृतिर्व्यापारोमृदुभेचरर्क्षलघुभेर्कारार्किरिक्तोज्झिते ५२ एकैकंकूपवस्त्रेतरुतलततउदकषट्पठ
णेस्रुकाणेप्येकैकंपृष्ठपार्श्वेनवकुसुडुसुखेमध्यएकंभृतोषट्

यतंकदाचिदितिवचनात् मिश्रक्रूरस्थिरतीक्ष्णेषुव्यवहारोनिषि
द्धः इतिनौकायानम् ५२ एकैकमिति भास्वद्धिष्ण्यात्सूर्यभात् एकंएकं कूपवस्त्रे कूपशब्देननौकामध्यकाष्ठं वस्त्रंशटिः तत्रएकंएकंधि-
ष्ण्यंलिखेत् तरुतलतःकूपतलतःउदकषट्षड्भानिदद्यात् पठणेएकैकं पठापंनौकामंडनकाष्ठंतत्रैकं स्रुकाणेकर्णधारणनिवेशस्थानेपि
एकैकं पृष्ठपार्श्वेनवनवकं पृष्ठंचपार्श्वंच पृष्ठपार्श्वम् तस्मिन् द्वयोःपार्श्वयोःत्रीणि त्रीणि पृष्ठेत्रीणिएवंनवकं सुखेउडुनौसुखेकुं एकंभृतोषट्

मृतिस्थानेषट्देयानि तत्रपद्मणाननशिखरतलेनोसत् पद्मणेनोसत् नौसुखेनोसत् शिखरेकूपमस्तकेनोसत् तलेन वधिष्ण्यानीष्टानि इ
ष्टंस्रुकाणेमध्येसिद्धिः मध्येत्रयोदशभानिसितिथिदानि शठाख्येभयं इहपोतचक्रेफलज्ञैः इतिनौकाचक्रम् ५४ आग्नेयमिति उत्पातेत्रिविधे-
दिव्यंतरिक्षभौमलक्षणेमंडलद्वयंनसत् तत्किं अंत्यंरेवती पित्र्यंमघा याम्यभंभरणी मिश्रंकृत्तिका विशाखे भगंपूर्वाफाल्गुनी अजांघ्रिभं-
पूर्वाभाद्रपदा एतदाग्नेयमंडलं अग्निसंबंधमंडलेउपसर्गेनसत् चपरं मृगदस्रवायुअदितिभंत्वाष्ट्रं अर्यमार्कोडुमृगशीर्षमश्विनीस्वातीपुन

भास्वद्धिष्ण्यात्सद्मणाननशिरवरतलेनोसदिष्टंस्रुकाणेमध्येसिद्धिः पद्माणेभयमिहगदितंपोतचक्रेफलज्ञैः ५४
आग्नेयंनसदंत्यपित्र्ययमभंमिश्रंभगाजांघ्रिभंवायव्यंमृगदस्रवाय्वदितिभंत्वाष्ट्रंयमार्कोडुच वसुचित्रोत्तराफल्गु

नीहस्तं इदंवायव्यमंडलं तत्रापिउत्पातोनसत् मैत्रमनुराधाकंरोहिणी ऐंद्रंज्येष्ठा वैश्वादुत्तराषाढायाश्चतुष्कं उत्तराषाढाभिजिच्छ्रवणध
निष्ठा एतदैंद्रंमंडलंभवेत् तत्इष्टफलदं मूलउ पांत्यमुत्तराभाद्रपदासर्प आश्लेषावारुणंशततारकाः अंबुपूर्वाषाढा ईशमार्द्रा ईज्यभंपु
ष्यः इदंवारुणमंडलं उत्पातेइष्टफलदम् तथाचोक्तममृतकुंभे अर्यम्णाचित्रादितिभेंदवाशिवस्वात्योर्कभंचेतिगणोऽनिलस्य याम्याज- २३
पादाग्निभगोपिपौष्णामघाविशाखाहुतभुग्गणोयम् १ तोयेशाहिर्बुध्न्यरक्षोंबुपूषासर्पेशानंवारुणाग्निश्चभानि मैत्रब्राह्म्यंवैष्णवंवासवं

द्रे वैश्वं चै द्रोयं भ वर्गो भिजिच्च २ फलं वायोर्गणात्कोपियदोपसर्गो भवेत्तदानीं पवनोतिचंडः सिक्ताभवेद्वारुधिरेणभूमि र्लोकेनृपेचापिमहान
न धर्मः १ वन्हेर्गणेनेत्ररुजोतिसारोएथ्व्यर्घहानिर्ज्वलनप्रकोपः गोश्वाल्यदुग्धास्तरवो ऽफलाःस्युर्गर्भप्रपातश्चनितंबिनीनाम् २ गावोबहुक्षीर
घृतादियुक्ता वृक्षाःप्रजाक्षेमसुभिक्षयुक्ताः मेघाःप्रभूतांबुमुचोभवंतिवर्गेजलेशस्यचसोपसर्गे ३ महेंद्रवर्गेवनितासुसौख्यंप्रजाश्चसर्वासुदि
ताभवंति निकामवर्षीमघवाधरित्रीप्रभूतसस्याधिगमश्चविद्यात् ४ इतिचतुर्मंडलानि ५५ नमिति मेषभात्मेषराशेःसकाशादेतास्तिथयो

ऐंद्रमैत्रकमैं द्रभि ष्टफलदंवैश्वाच्चतुष्कंतयोस्तातंमूलमुपांत्यस पैवरुणाहीशेज्य भंवारुणास् ५५ नंपूभाभजपू
रिनंजरिजपूर्घातातिथिर्मेषभात्सूभम्बुशशोबृशुःशुमगुशऋवीरामहोस्वाद्गुमू: श्रूपूषांत्यभरोशिवाहि
भमयोन्चंद्रेषुनंदद्विषट्दिग्रामाद्रियुगाष्टरुद्रवयोयातंभमिंदुस्तथा ५६ घाताःस्युः ताःकाः नंनंदा पूपूर्णा भाभद्रा
जजयापूपूर्णा रिरिक्ता नंनंदा जजया रिरिक्ता जजया पूपूर्णा एताःतिथयः अथघातवारः सूसूर्यः शशनिः चंचंद्रः बुबुधः शशनिः
बृबृहस्पतिः शुशुक्रः मंमंगलः गुगुरुः शुशुक्रः इतिघातवाराः अथघातभं ममघा हहस्तः स्वास्वातिः अनुअनुराधा मूमूलं श्रुश्रवणः पूपूर्वा-
षाढा अंत्यंरेवती भभरणी रोरोहिणी शिवाआर्द्रा अहिभंआश्लेषा इतिघातनक्षत्राणि अथानंतरंघातचंद्रः चंद्रःप्रथमःइषवःपंच नंदानव

द्विद्वौ षट् षष्ठः दिक् दशमः रामस्तृतीयः अद्रिः सप्तमः युगानि चतुर्थः अष्ट अष्टमः रुद्राः एकादश रवयो द्वादश एते घातचंद्राः कथिताः इदं य-
द्यपि घातचतुष्टयं निर्मूलं दृश्यते तथापि रामज्योतिर्विदा मुहूर्तचिंतामणौ लिखितत्वात् भूपंचांकद्व्यंगदिग्वन्हिसप्तवेदाष्टेशार्काश्च घाताख्यचंद्राः
मेषादीनां सजसेवाविवादे यात्रायुद्धोद्वाहकालेषु नूनम् इति घाततिथिवारनक्षत्रचंद्राः ५६ चापेंत्य इति दिनकृति सूर्ये चापे धनुषि स्थिते अंत्ये-
मीनगते र्केवा अपायनगे दक्षिणायनगते जीवे गुरौ सिंहस्थिते वा जीवे बाले ऽस्ते वातिचारगे वास्थविरतां प्राप्ते सति सीमंतकर्म अन्नभुजिः अन्न

चापेंत्ये दिनकृत्यपायनगते जीवे च सिंहस्थिते बाले ऽस्तेप्यतिचारगे स्थविरतां प्राप्ते तथा भार्गवे सीमंतो
न्नभुजिस्तथोपकरणं दंताश्च कौसुंभकं धार्यं स्त्रीभिरिदं सदा सदपरं कार्यं न कार्यं कदा ५७ प्राशनं तथा स्त्रीभिरुप

करणं भूषणं दंतशब्देन करभूषा अब्जं मौक्तिकं कौसुंभकं वस्त्रादि इदं सदा स्त्रीभिर्धार्यं अपरं सत्कार्यं कदापि न कार्यं अत्र परिशेषविधानात् सर्वं निषिद्धमु-
क्तं तथा चोक्तम् ज्योतिर्निबंधे नीचस्थे वक्रिते वाप्यतिचरणगते बालवृद्धास्तगे वा संन्यासो यज्ञयात्रा व्रतनियमविधिः कर्णवेधोपि दीक्षा मौंजीबंधोंग
नानां परिणयनविधिर्वास्तुदेवप्रतिष्ठास्त्याज्याः सद्भिः प्रयत्नात् त्रिदशपतिगुरौ लोपसंस्थे हरिस्थे १ तत्र शुक्रास्ते प्रतिप्रसवमाह नृत्ये यानेगृहे जीर्णे प्रा २४
शनांतेषु सप्तसु वधूप्रवेशमांगल्यं न मौढ्यं गुरुशुक्रयोः २ वधूप्रवेश इत्युद्वाहितायाएव गृहप्रवेशः निर्णयसिन्धौ तेपि प्रागस्तादुदयात्सरं स्कृगुरु

पक्षेऽथवावार्धकेबालेस्तेस्थविरेसितेस्फुरद्गुरौ कार्यंनकुर्यादिदम् चौलाद्युद्वहनांतमालयस्फुरत्स्थानव्यवस्थागमो द्योपाकर्ममहार्पणव्रतनवोत्सर्गोहरे
र्व्याध्वरः १ अन्यच्च अस्तंगतेगुरौस्तुक्रेबालेवृद्धेमलिम्लुचे व्रतारंभोत्सर्जनंचनकुर्यान्मौंजिबंधनम् वापीकूपतडागादिप्रतिष्ठायज्ञकर्मंच गृहप्रवेशं
गोदानंस्थानोत्सवमहोत्सवान् नकुर्यान्मलमासेषुगुरुशुक्रेतथास्तगे तत्रापिसिंहस्थेगुरौ भूपालवल्लभेविशेषःकथितोस्ति अष्टाविंशतिवासरान्स्फुर-
द्गुरोर्वक्रातिचारेत्यजेत्सिंहेपंचनवांशकान्मृगगतेपंचैवनीचांशकान् गोदायांतरवासिनांव्रतविवाह क्षौरकार्यादिकंकार्यंतत्रसदात्रनापरत्रतीर्थेहिगो-
दाजलाव १ गर्भाधानादिकाःसर्वाःप्राशनांताःक्रियाश्चताः कर्तव्याःसर्वदेशेषुसिंहस्थेचबृहस्पतौ २ गोदावर्युत्तरेतीरे भागीरथ्याश्चदक्षिणे विवाहा
आद्यानामनवद्यपद्यरचनानानाविचिंत्यात्मनालोकानांव्यवहारदर्शनविधौसम्प्रेषुवृत्तैःस्फुटम् श्री
मद्दैवतराजपूजितपदःश्रीकान्हजिद्वाडवःसूनुस्तस्यमुहूर्तदीपमकरोदेनंमहादेववित् ५८
दिनकर्तव्यंसिंहस्थेचबृहस्पतौ ३ वरलाभातिकाल्लाप्त्यांदुर्भिक्षाद्देशविप्लवात् गौतम्यादक्षिणेतीरेसिंहस्थेप्युद्वहःशुभः ४ सिंहस्थेपिमघासंस्थं
गुरुंयत्नेनवर्जयेत् अन्यत्रसिंहभागेषुविवाहादिविधीयते १ षष्टिभिर्दिवसैर्मासैःकथितोबादरायणैः उत्तरेदेवकार्याणिपितृकार्याणिचोभयोः १ ए
वंगुरोरतिचाराल्लुप्ताब्दभायाति तथाचोक्तंमुहूर्तचिंतामणौ गोजांत्यकुंभेतरभेतिचारगोनोपूर्वराशिंगुरुरेतिवक्रितः तदाविलुप्ताब्दइहातिनिंदि-
तःशुभेषुरेवास्फुरनिम्नगांतरे इत्याद्यखिलमूह्यम् ५७ आद्यानामिति महादेवःकविःएनंमुहूर्तदीपमकरोत् किंलक्षणःश्रीमद्दैवतराजपूजितपदः

श्रीकान्हजिद्वाडवः तस्यसूनुः श्रीमांश्चासौरैवतश्चरैवनाचलस्तस्यराजानः तैःपूजितौपादौयस्य एवंविधःकान्हजितवाडवः तस्यसूनुःअपत्यंकिंकृ
त्वाःकरोत् आद्यानांवराहश्रीपतितल्लत्रिविक्रमाद्याचार्याणांअनवद्यायापद्यरचनाग्रंथान् रत्नमालात्रिविक्रमशतरत्नकोशव्यवहारप्रकाशसज्जनव-
ल्लभराजवल्लभशतमुहूर्ततत्वादिनिबंधान् नानाअनेकप्रकारेण आत्मनाचित्तेनविचिंत्यविचार्य किंनिमित्तंलोकानांसर्वेषांव्यवहारमुहूर्त

शाकेरामगजेषुभूपरिमिते १५८३ सौम्यायनेभास्करेचैत्रेमासिसितेदलेशिवतिथौवारेविधौभास्करे व्यायातेमुनिवाणिजे
चकरणेश्रीमज्जुजेपत्तनेलेखित्वायमुहूर्त्तदीपकमभवारव्यानंमहादेवकः १ इतिश्रीमहादेवभट्टविरचितेमुहूर्तदीप
कःसटीकःसमाप्तः ॥ ७ ॥ ७ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ७ ॥

दर्शनस्यविधिर्निमित्तम् वस्तुव्यवहारदर्शनंतुदीपेनैवभवति तथासप्तसप्तेषुवृत्तैःकृत्वामुहूर्त्तदीपमकरोदिति यथादीपेवर्त्तिस्तथाऽत्रसप्तपंचाश
द्वृत्तलक्षणावर्त्तिस्तयाहेतुभूतया बालावबोधार्थमियंमयात्रव्याख्याकृताविस्तरवर्जिताया तुष्यंतुसंतःप्रविचार्यभक्त्या यथातथैवोपहसंत्वसंतः
१ इतिश्रीमन्महादेवकविविरचितामुहूर्त्तदीपकटीकासमाप्ता ॥ ७ ॥ ७ ॥ श्रीमद्गजाननार्पणमस्तु ॥ ७ २५

हा मुहूर्तदीपकग्रंथ मुंबईमध्यें हनुमंतगल्लीत राजश्रीबापूसदाशिवशेटहेगिष्टे श्रीवर्धनकर याणीं आपल्या शिलाछापखान्यांत छापिला शके १७
८६ रक्ताक्षीनामसंवत्सरे दक्षिणायने आषाढमासे शुक्लपक्षे एकादश्यां शुक्रवारे ॥ श्रीः ॥ ❀ ॥ श्रीः ॥ ❀



मासमाभ्युदयःश्राद्धं पुत्रसंस्कारकर्मणि ॥ पाल्लिार जःस्खला चेत्स्यान्नकुर्यात्तिनातदा ॥ विवाहव्रत
यसेषु मातायदि रजःस्खला ॥ न दा सम स्यमाप्नोति पंचमं दिवसे विना ॥ २ ॥

